**"यथाप्रतीतं वा सर्वमत्र नैव विरुद्ध्यते ॥"**[1] **इति ॥४॥**

(रा) अधिभूतं च किमित्यस्योत्तरम् - **अधिभूतमिति** । भूतानि सदेहान् जीवानधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु । **क्षरो भावः,** विनाशी भावः । कार्यभूतः पदार्थः । भवत्युत्पद्यत इति व्युत्पत्तेः । 'अधिदैवं किम्' इत्यस्योत्तरं 'पुरुषश्च' इत्यादि । **अधिदैवतं** दैवतानि सर्वदेवानधिकृत्य तत्स्वामित्वेन वा, देवताप्रकरणे मुख्यतया प्रतिपाद्यत्वेन वा वर्तमानं च । किमिति पृष्टं वस्तु । **पुरुषः** पुरि देहे शेते तिष्ठतीति पुरुषो जीवः । स च सर्वजीवाभिमानी सङ्कर्षणो ब्रह्मा वा ज्ञेयः । अस्मिन् देहेऽधियज्ञः क इत्यस्योत्तरम् **अधियज्ञोऽहमेवेति** । प्रागुक्तदिशाऽधियज्ञ इति प्रादिसमासः । अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अत्र लौकिकदेहे यज्ञाधिष्ठाताऽहमेवेत्यर्थः । 'अत्र' इति देहविशेषणम् ईश्वरदेह-व्यावृत्त्यर्थम् । भगवतः प्राणिदेह इव स्वदेहे पृथगभावेन नियन्तृत्वाभावात् । कर्तृभोक्तृफलदातॄणां देहे प्रेरकत्वेन वर्तमानस्यात्र विवक्षितत्वात् । 'देहे' इत्युक्तिरप्यस्मिन् देहेऽधियज्ञः क इति कृतप्रश्नानुरोधात् । प्रश्ने वा अधियज्ञः क इत्येवोक्तावग्न्यादेरप्यधियज्ञस्य हरेरन्यस्य सत्वात् । प्रश्नस्य तद्विषयत्वे सिद्धार्थतादोषप्रसक्तेस्तद्व्यावृत्त्यर्थं कर्तृभोक्तृफलदातॄणां देहे प्रेरकतया वर्तमानोऽधियज्ञः क इत्यर्थलाभाय देह इत्यवश्यं वाच्यत्वात् ।

किंच पूर्वाध्यायान्ते 'साधियज्ञं मां विदुः'[2] इति भगवतोऽधियज्ञ-साहित्योक्त्याऽधियज्ञो भगवतोऽन्योऽग्न्यादिरिति प्राप्तशङ्काव्युदासाय च 'देहे' इत्युक्तिः । सर्वप्राणिदेहगताधियज्ञाख्यरूपविशेषापेक्षया साहित्याभिप्रायेण 'साधियज्ञं माम्' इत्युक्तिरिति । 'देहे' इत्युक्त्या साहित्योक्तेर्गतिसूचनेन भग-वदन्यत्वशङ्कानिरासात्, साहित्योक्त्या प्राप्तभेदशङ्काया अवश्यं परिहार्यत्वादेव, प्रथमप्राप्तस्यात्र देहेऽधियज्ञः कथं केन प्रकारेणेति प्रश्नस्य परिहारमनुक्त्वा क इति प्रश्न एव परिहृतः ।

किंच सर्वयज्ञभोक्तृत्वसर्वयज्ञप्रवर्तकत्वप्रकारेण हि भगवतोऽधियज्ञत्वम् । तच्च सर्वयज्ञभोक्तृत्वादिकं 'भोक्तारं यज्ञतपसाम्'[3] इत्यादि पञ्चमान्तोक्तं

---

१. गीताकल्पवचनम् । - गी.भा.; २. गी.(७-३०)
३. गी. (५-२९)

श्रुतवतोऽर्जुनस्य सिद्धमित्यधियज्ञोऽहमिति भगवतो यज्ञाधिष्ठातृत्वरूपाधियज्ञत्वोक्त्या कथम् 'अधियज्ञः' इत्यस्य भोक्तृत्वादिना प्रकारेणाधियज्ञत्वमिति परिहारस्य प्राप्तत्वाच्च तत्परिहारो नोक्त इति ।

यद्वा - कथमित्यस्य किं लक्षणक इत्यर्थः । अधियज्ञोऽहमेवेत्यधियज्ञाभिन्नत्वेनोक्तस्य हरेः 'कविं पुराणम्[1]' इति कवित्वादिलक्षणोक्त्या एवं लक्षणकोऽधियज्ञ इति प्राप्तेर्नोक्तमुत्तरम् । **'देहभृतां वर'** इति सम्बुद्धिः । देहभृतां देह इति चोभयत्रान्वयो ज्ञेयः ।

श्लोकद्वयस्यायमर्थसङ्ग्रहः - **ब्रह्म** मम व्याप्तरूपं **परममक्षरमुच्यते । अध्यात्मं स्वभावः** । जीवचिदुपकारिदेहेन्द्रियान्तःकरणलक्षणः पदार्थः । जीवराशिर्वा । कर्म तु चराचरविषयकेश्वरकर्तृकसर्जनम् । **अधिभूतं तु क्षरो भावः** सदेहजीवोपकार्युत्पत्तिविनाशवान् देहेन्द्रियाद्यन्यपदार्थ उच्यते । **अधिदैवतं च पुरुषः**, ब्रह्मा, सङ्कर्षणो वा । अत्र देहस्थितोऽधिकयाज्यत्वहेतुनाऽधियज्ञाख्यो रूपविशेषो **अहमेव** इति साहित्योक्त्या प्राप्तभेदशङ्कानिरासायैवकारप्रयोगः ।

यद्वा - **स्वभावो** भगवत्स्वभावोऽध्यात्ममुच्यते । अधिकत्वात् । **क्षरो भावः** सर्वजीवराशिरधिभूतम् । भूतशब्दितपृथिव्यादिजडाधिकत्वात् । "षकारः प्राण आत्मा[2]" इति श्रुत्या षकारस्य चेष्टापर्यायप्राणवाचित्वात् । पुरुप्राणत्वहेतुना पुरुषशब्दिता रमा अधिदैवतम् । दैवतशब्दितो विष्णुरधिको यस्या इति व्युत्पत्तेरिति ।

एतेन 'ते तद्ब्रह्म' इत्यर्धद्वयस्यायमर्थः । **ब्रह्म** व्याप्तं तत् **मे रूपं ते विदुः** । **कृत्स्नमध्यात्मं** जीवोपकारिदेहेन्द्रियान्तःकरणलक्षणं वस्तु, जीवराशिं वा । सृष्टिलक्षणं भगवत्कर्म चाखिलं विदुः । **साधिभूताधिदैवम्** अधिभूतशब्दितसदेहजीवोपकारित्वेन स्थितोत्पत्तिविनाशिपृथिव्यादिपदार्थस्थत्वेन तन्नियन्तृतया तत्सहितं तद्गतरूपविशेषसहितमित्येके । पृथिव्यादिभूताधिकतयाऽधिभूतशब्दितसर्वजीवराशौ स्थिततया तत्सहितमिति वा । अधिदैवशब्दितसर्वजीवाधिपतौ ब्रह्मणि सङ्कर्षणे वा स्थितत्वेन तत्सहितं तद्गतरूपविशेषसहितमित्येके । अधिदैवशब्दितरमासहितमिति वा । **साधियज्ञं च** अधियज्ञशब्दितसर्वप्राणिगतरूपविशेषसहितं च 'मां ये विदुः' इति ॥४॥

---

१. गी. (८/९); २. ऐतरेयोपनिषत् (२-८-६)

**अन्तकाले च मामेव स्मरंस्त्यक्त्वा[1] कलेवरम् ।**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥**

**(वि) प्रयाणकालेऽपि किमर्थं स्मर्तव्योऽसि, इत्यत्र परिहारमाह** - अन्तकाल इति । **अन्तकाले मामेव स्मरन्** देहं **त्यक्त्वा यः प्रयाति स मद्भावं** मयि सत्तां निर्दुःखनिरतिशयानन्दात्मिकां **याति** ॥५॥

**(रा)** अन्तकाले च किमर्थं स्मर्तव्योऽसीति प्रश्नस्योत्तरमाह **अन्तकाले चेति। अन्तकाले** मृतिकाले । **मामेव स्मरन्** । **कलेवरं** देहम् । **त्यक्त्वा यः प्रयाति स मद्भावं** मयि निर्दुःखनिरतिशयानन्दानुभवात्मिकां सत्तां **याति** । सन्देहोऽत्रार्थे नास्तीत्यर्थः । निर्दुःखनिरतिशयानन्दाभिव्यक्तिरूपमद्भावप्राप्त्यर्थं मत्स्मरणमन्तकाले कार्यमित्युक्तं भवति ॥५॥

**यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।**
**तं तमेवैति[2] कौन्तेय सदा तद्भावभावितः ॥६॥**

**(वि) तत्कथमित्यत आह** - यं यमिति । **स्मरंस्त्यजतीत्येककालत्वप्रतीतेर्न शङ्कावकाशः । दुःखाच्छरीरत्यागकाले स्मरणायोगाद्भिन्नकालीनत्वेऽप्यविरोधइति शङ्का स्यात् । सा मा भूदित्यन्त** इति **विशेषणम् । अन्तकाले स्मरणोपायमाह** - सदेति । **भावोऽन्तर्गतं मनः स्यात्, 'भावोऽन्तर्गतं मनः'[3]** इत्यभिधानात् । **भावितत्वमधिवासित-त्वम् । 'भावना त्वतिवासना[4]'** इत्यभिधानात् । **अपरोक्षज्ञानिनां प्रारब्ध-**

---

१. मुक्त्वा - पा

२. अत्र भागवतोक्तजडभरतप्रसङ्गः दृष्टान्तत्वेन ध्येयः - 'तदानीमपि पार्श्ववर्तिनमात्मजमिवानुशोचन्तमभिवीक्षमाणो मृग एवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कलेवरं मृतमनु न मृतजन्मानुस्मृतिरितरवन्मृगशरीरमवाप ॥' इति भागवते (८/८/२७)

अत एवोक्तम् - 'सन्ततं चिन्तयेनन्तं अन्तकाले विशेषतः' इति (द्वादशस्तोत्रे)

३. अभिधानवचनम् - गी.भा.

४. अभिधानवचनम् - गी.भा.

**कर्मावसानद्वारा सदा तद्भावभावितत्वमन्तकाले भगवत्स्मरणोपाय इति द्रष्टव्यम् ॥६॥**

**(रा)** तत्कथमित्यतः सामान्यव्याप्तिमाह - **यं यमिति । वा** अथवा **यं यमपि** [1]**भावं पदार्थम्, अन्ते स्मरन् कलेवरं त्यजति तं तमेव भावं याति ।** अन्तकाले स्मरणोपायमाह - **सदेति । सदा** निरन्तरम् । **तद्भावेन** तस्मिन्नन्तर्गतेन मनसा । 'भावोऽन्तर्गतं मनः' इत्यभिधानात् । **भावितो** वासितः । नित्यं तच्चिन्तया जाततद्गोचरस्मृतिजनकसंस्कारवानित्यर्थः । एवंरूपः पुमान् भावमन्ते स्मरंस्त्यजतीत्यन्वयः । एतच्च नित्यस्मृतिरूपं सदा त द्भावभावितत्वमपरोक्षज्ञानं जनयित्वा भोगेन प्रारब्धावसानानन्तरमन्तकाले स्मृतिहेतुः, न साक्षादिति ज्ञेयम् । स्मरंस्त्यजतीति त्यागस्मरणयोरेक-कालत्वप्रतीतावपि 'अन्त' इत्युक्तिस्त्यागकाले महादुःखात् स्मरणमसम्भा-वितमिति मन्दाशङ्काव्युदासाय । सर्वदा शरीरं हेयमिति मन्यमानानां ज्ञानिनां न देहत्यागो दुःखहेतुः । अतस्तदा स्मरणं नासम्भावितमिति प्रदर्शनार्था । अज्ञस्यापि त्यागक्षणात् पूर्वं दुःखम्, न तु त्यागक्षण इति ॥६॥

**तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।**
**[2]मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥७॥**

---

१. हिरण्यकशिपुर्भूतममन्यत मृतौ हरिम् ।
अतो भयानको जातस्तत्र राजानमेव च ।
मत्वा राजैव सञ्जातः कृष्णं चक्रादिलक्षणैः ।
मृतिकाले हरिं चैव मत्वा भक्त्यैव केवलम् ।
द्वास्थत्वं हरिमाविश्य प्रापैव मनुजोऽपि तु ॥ इति गारुडे । -भा.ता.(७/१/४५)

२. भयादपि हरिं भक्त्या चिन्तयंस्तत्स्वरूपताम् ।
पेशस्कारिवदायाति द्विषन् द्वेषसरूपताम् ।
सुखरूपस्य हि द्वेषो दुःखरूप इतीर्यते ।
तस्माद्दुःखं सदा याति द्वेषवान् पुरुषोत्तमे ।
नृसिंहद्वेषतो दुःखं रक्षोरूपेण रावणः ।
अगाच्च रामविद्वेषाच्छिशुपालस्तथैव च ।

**(वि) अतः प्रयोजनवत्त्वात् सततं भगवदनुचिन्तनं कर्तव्यमित्याह - तस्मादिति ॥७॥**

(रा) अन्तकालस्मरणस्य फलोक्तेरुपयोगमाह - **तस्मादिति** । **नित्यं** मत्स्मृतेः मत्प्राप्तिहेतुचरमकालीनमत्स्मरणकारणत्वादित्यर्थः । **मय्यर्पितमनोबुद्धिः** सन् युध्यस्व ॥७॥

**अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।**
**परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥८॥**

**(वि) सदा तद्भावभावितत्वं स्पष्टयति - अभ्यासेति । अभ्यास एव योगः, तेन युक्तेनानन्यगामिनानन्यविषयेण चेतसाऽनुचिन्तयन् परममुत्तमं पुरुषं पुरिशयं पूर्णं च, 'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृतं नैनेन किञ्चनासंवृतम्'[1] इति श्रुतेः । दिव्यं सृष्ट्यादिक्रीडायुक्तं याति ॥८॥**

(रा) सदा तद्भावभावितत्वं स्पष्टयति - **अभ्यासेति** । अभ्यासः पुनः पुनरावर्तनम् । तद्रूपयोगेनोपायेन युक्तेन सहितेन । **अनन्यगामिना**ऽनन्यविषयेण **चेतसा** । **परमम्** उत्तमम् । **दिव्यं** सृष्ट्यादिक्रीडादिगुणयुक्तम् । दी॰ यते-रौणादिको यक् । परममुत्तमं पुरि सर्वप्राणिदेहे शेते नियन्तृतया वर्तत इति वा, पूर्णत्वाद्वा पुरुषाख्यम् । 'पॄ पालनपूरणयोः' इत्यतः कुषन्, धातोरुकारः । **अनुचिन्तयन् याति** । परमं पुरुषमित्यनुषङ्गः ॥८॥

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं [2]तमसः परस्तात् ॥९॥**

---

ततो भक्त्या परं यातो द्वेषरूपस्त्वधोगतिम् ।
तस्मात् सर्वगुणोद्रेकिविद्वेषात् सर्वदोषवान् ।
भवेदिति सरूपत्वं द्वेषादेः पुरुषस्य हि ॥ इति भागवततन्त्रे । -भा.ता.(११/९/२२)

१. श्रुतिवचनम् । - गी.भा.
२. तमोभिमानिन्याः दुर्गायाः परः, लक्ष्म्युत्तमः इत्यर्थः ।

**(वि) कथम्भूतः केन वा प्रकारेण स्मर्तव्योऽसीत्यत्र परिहारमाह - कविमिति श्लोकद्वयेन । कविं सर्वज्ञम् । 'त्वं कविः सर्ववेदनात्'[1] इति वचनात् । पुराणं पुरापि नवम् । पृषोदरादित्वात् साधुः । अनुशासितारं शिक्षकम् । अणोरप्यणीयांसं सर्वस्य धातारं धारणपोषणकर्तारम् । अचिन्त्यरूपं वाङ्मनसागोचरस्वरूपम् । आदित्यवर्णं सूर्यसदृशदेहप्रभम् । देहित्वे मृत्यादिप्रसङ्ग इत्यत उक्तम् - तमसः परस्तादिति । तमसः अव्यक्तात् परस्तात् स्थितम् । 'अव्यक्तं वै तमः । परस्ताद्धि स ततः'[2] इति श्रुतेः । अप्राकृतविग्रहमित्यर्थः । यद्वा - मृत्युस्तमः । 'मृत्युर्वै तमोज्योतिरमृतम्'[3] इति श्रुतेः । मृत्युमदादिदेहरहितमित्यर्थः ॥९॥**

**(रा)** कथम्भूतः स्मर्तव्योऽसीति प्राकृतप्रश्नस्योत्तरमाह - **कविमिति । कविं सर्वज्ञम् । पुराणमनादिम् । अनुशासितारं** शिक्षकम् । **अणोरणीयांस**-मत्यन्ताणुप्रमाणम् । **सर्वस्य** चराचराख्यविश्वस्य । **धातारं** धारणपोषण-कर्तारम् । **अचिन्त्यरूपं** साकल्येन मनसोऽविषयम् । **आदित्यवर्णं** रविप्रभम् । **तमसः** प्रकृतेर्मृत्योर्वा । 'मृत्युर्वाव तमः'[4] इति श्रुतेः । ताभ्यां **परस्तात्** । तदुभयास्पृष्टत्वेन स्थितमिति शेषः ॥९॥

**प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ।**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥१०॥**

**(वि) एवम्भूतं भगवन्तं निश्चलेन मनसा । तदुक्तम् -**

**'ब्रह्मरुद्ररमादिभ्योऽप्युत्तमत्वं स्वतन्त्रताम् ।**
**सर्वस्य तदधीनत्वं सर्वसद्गुणपूर्णताम् ॥**
**निर्दोषत्वं च विज्ञाय विष्णोस्तत्राखिलाधिकः ।**
**स्नेहो भक्तिरिति प्रोक्तः सर्वोपायोत्तमोत्तमः ॥'**

**इत्याद्युक्तलक्षणया भक्त्या योगबलेन च युक्तो यः, भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् प्रयाणकालेऽनुस्मरेत् । स तं दिव्यं परमं पुरुषमुपैति ॥१०॥**

---

१. ब्राह्मवचनम् - गी.भा.(८/९)
२. पिप्पलादशाखावचनम् । - गी.भा.; ३. गी.भा. उदाहृतप्रमाणवचनम् ।; ४. गी.भा.

(रा) भक्त्या युक्तः सन् [1]प्रयाणकाले योगबलेन भ्रुवोर्मध्ये प्राणमावेश्याचलेन मनसा यः स्मरेत् स दिव्यं परमुत्तमं पुरुषमुपैति इति योजना । अत्र 'आदित्यवर्णम्' इति सशरीरत्वप्राप्तेर्जन्मादिप्रसङ्गः इति शङ्काव्युदासाय 'तमसः परस्तात्' इत्युक्तम् । तद्देहस्याप्राकृतत्वान्न जन्मादिदोष इति भावः । योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्येत्येतद्वायुजयादिमन्मात्रासाधारणम् । न तु उच्चिक्रमिषोः सर्वस्य साधारणम् । वायुजयहीनानां ज्ञानभक्तिवैराग्यपूर्त्यैव मुक्तिसिद्धेः । वायुजयादिमतां तु ईषज्ज्ञानाद्यसम्पूर्तावपि वायुजयादौ निपुणानां तद्बलादेवाल्पमुक्तिः किञ्चित् शीघ्रं च भवतीति विशेष इति ॥१०॥

**[2]यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥११॥**

(वि) मरणकाले कर्तव्यमेव सध्येयं प्रपञ्चयति - यदक्षरमित्यादिना । अक्षरं सर्वथा नाशरहितम् । वीतरागाः अपगतकामादयो मुक्ताः । ब्रह्मचर्यं मनआदीनां ब्रह्मणि चरणम् । पद्यते गम्यते मुमुक्षुभिरिति पदम् । 'गीयसे पदमित्येव मुनिभिः पद्यसे यतः'[3] इति वचनात् । तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये तत्स्मरणप्रकारं प्रवक्ष्ये ॥११॥

(रा) वायुजयादिमतां मरणकाले कर्तव्यमेव सध्येयं स्पष्टयति **यदक्षरमिति** । यद्वा, केन प्रकारेण स्मर्तव्योऽसि, इति प्रश्नस्योत्तरं सध्येयमुच्यते - **यदक्षरम्** इत्यादि त्रिभिः । यत्पदम् **अक्षरं** सर्वथा नाशरहितम् । **वेदविदो वदन्ति** । **यच्च** पदं **वीतरागाः** अपगतकामादिदोषाः । **यतयः** यत्नशीलाः । **विशन्ति** प्रविशन्ति । **यच्च** पदमि**च्छन्तः ब्रह्मचर्यं** मनआदीनां ब्रह्मणि चरणं ब्रह्मचर्यम् । **चरन्ति** अनुतिष्ठन्ति । **तत्पदं** पद्यते मुमुक्षुभिः प्राप्यत इति पदम् । 'षद्लृ गतौ'

---

१. देहोत्क्रमणकाले, 'स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति'(२/७२) इति ह्युक्तम्।
२. सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत् ॥ कठ. (१/६/१)
३. नारदीयवचनम् । - गी.भा.

इत्यतः कर्मण्यकारप्रत्ययः । स्वरूपम् । सङ्ग्रहेण सङ्क्षेपेण । प्रवक्ष्ये तत्पद-स्मरणप्रकारं प्रवक्ष्यामीत्यर्थः ॥११॥

**सर्वद्वाराणि[१] संयम्य मनो हृदि निरुध्य च ।**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥**

**(वि) ब्रह्मनाडीं विना यद्यन्यत्र गच्छति, तर्हि विना मोक्षं स्थानान्तरं प्राप्नोतीत्यतः सर्वद्वाराणि संयम्य निर्गच्छन् । 'चक्षुषा सूर्यं दिशः श्रोत्रेण चैव हि'[२] इत्यादिवचनात् । हृदि नारायणे । 'ह्रीयते च जगद्यस्मात् हृदित्येवं प्रभाष्यसे'[३] इति वचनात् हरतीति हृदिति व्युत्पत्तिः, जस्त्वं छान्दसम् । अहृदीति वा । 'अप्राणो ह्यमनाः' इति श्रुतेः । मनो निरुध्य नहि मूर्ध्नि प्राणे स्थिते हृदये मनसः स्थितिः सम्भवति । 'यत्र प्राणो मनस्तत्र तत्र जीवः परस्तथा'[४] इति वचनात् । आत्मनः प्राणं वायुं सुषुम्नया मूर्ध्नि ब्रह्मरन्ध्रे आधाय योगधारणामास्थितः योगधारण एवाभियुक्तः ॥१२॥**

**(रा)** एवं ध्येयस्वरूपं तत्स्मरणप्रकारोक्तिं च प्रतिज्ञायेदानीं तत्प्रकारमाह - **सर्वेति । सर्वद्वाराणि** वायुसञ्चारस्थानसर्वसुषुम्नोत्तरनाडीर्नियम्य । **हृदि** हरति जगदिति हृन्नामके नारायणे । हरतेः क्विप् । ह्रस्वस्य पिति कृति तुक् । **मनो निरुध्य चात्मनः प्राणं** प्राणवायुम् । **मूर्ध्नि** सुषुम्नामार्गेण ब्रह्मरन्ध्रे । **आधाय । योगधारणाम् आस्थितः** अखण्डस्मृतिरूपयोगधारण एवाभियुक्त इत्यर्थः ॥१२॥

---

१. दक्षिणश्रोत्रमार्गेण देवलोकं व्रजत्यसौ ।
वामश्रोत्रेण पितॄणामिति वेदविदो विदुः ॥ इति प्रवृत्तितन्त्रे । - भा.ता. ४/२५/५२

२. व्यासयोगवचनम् - गी.भा. ;
मोक्षधर्म(म.भा. शान्ति अ.३१७ श्लो १-७)

३. पाद्मवचनम् - गी.भा.

४. व्यासयोगवचनम् - गी.भा.

[१]ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥१३॥

(वि) ओमित्येकाक्षरं वाचकं यत् तद्ब्रह्म व्याहरन्नुच्चरन् मामेव ब्रह्मानुस्मरन् यो देहं त्यजन् प्रयाति स परमां गतिं याति ॥१३॥

(रा) ओमित्येकमक्षरं वाचकं यस्य तदोमित्येकाक्षरं ब्रह्म परं ब्रह्म । मां व्याहरन्ननुस्मरन् । ओमित्युच्चार्य तद्वाच्यं ब्रह्मरूपं मामनुस्मरन् यः देहं त्यजन् प्रयाति प्रैति । स याति परमां गतिम् ॥१३॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥१४॥

(वि) काऽसौ परमा गतिरित्यत आह - अनन्येति । नित्ययुक्तस्य नित्योपायवतो योगिनः परिपूर्णयोगस्य । एतच्च वायुजयादियोगयुक्तविषयम् । वायुजयादिरहितानामपि ज्ञानभक्तिवैराग्यादिसम्पूर्णानां भवत्येव मुक्तिः । तद्वतां तु ईषज्ज्ञानादिसम्पूर्णानामपि निपुणानां तद्बलात् कथञ्चिद्भवतीति विशेषः । उक्तं च -

'सम्पूर्णानां भवेन्मोक्षो विरक्तिज्ञानभक्तिभिः ।
नियमेन तथापीरजयादियुतयोगिनाम् ।
वश्यत्वान्मनसस्त्वीषत् पूर्वमप्याप्यते ध्रुवम् ॥'[२] इति ॥१४॥

(रा) अन्तकाले मत्स्मरणं नित्याभ्यासवत एव भवति नान्यथेति स्पष्टमाह - अनन्यचेता इति । सततमन्यविषयकचेतोहीनः सन् यो मां नित्यशः

१. अहमेखोऽखिलगुणो वाचको प्रणवो मम ।
अकाराद्यतिशान्तान्तः सोऽयमष्टाक्षरो मतः ॥ तन्त्रसारसङ्ग्रहे (१/३)
ओमशेषगुणाधार इति नारायणोऽप्यसौ । (ऋग्भाष्ये)
ओतत्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोतताम् ॥ (अनुव्याख्याने)
ओङ्कारो भगवान् विष्णुस्त्रिधामावचसां पतिः ॥ (विष्णुपुराणे)
- इत्यादेः ओङ्कारवाच्यो भगवान्नारायणः ।

२. व्यासयोगवचनम् - गी.भा.(८/१०)

**स्मरति** । तस्य नित्ययुक्तस्य नित्योपायवतः । **योगिनः** सम्पूर्णोपायवतः । **अहं सुलभः** अन्तकाले स्मृतिविषयो भवामीत्यर्थः । यद्वा - सुलभः सुखेन लभ्यः प्राप्य इत्यर्थः । प्रागुक्तपरमगतिः केत्यतो मत्प्राप्तिरूपेति तदुपायोक्तिपूर्वं परमगतिविवरणार्थोऽयं श्लोकः ॥१४॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥**

**(वि) भगवत्प्राप्तिं स्तौति** - मामिति । **भगवन्तं प्राप्तानां पुनर्जन्मानवाप्तौ हेतुः संसिद्धिमित्यादि ॥१५॥**

**(रा)** अत एव परमगतिः सुलभ इत्युक्तभगवल्लाभश्च तत्प्राप्तिरूपमेव फलमिति भावेन तत्प्राप्तिं स्तौति - **मामिति** । **महात्मानो** ज्ञानिनः । **मामुपेत्य** प्राप्य । **दुःखालयं** दुःखाश्रयम् । **अशाश्वतम्** अनित्यं नाशशिरस्कम् । **जन्म** देहयोगं **पुनर्नाप्नुवन्ति** । कुतः, यतः **परमां संसिद्धिं** मोक्षलक्षणम्, **गताः** प्राप्ताः । तत इति योजना ॥१५॥

**[1]आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।**
**[2]मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥१६॥**

**(वि) ब्रह्मादीन् प्राप्तानामपि पुनर्जन्माभावात् किं विशिष्याभिधीयते मामुपेत्य पुनर्जन्म नाप्नुवन्तीत्यत आह** - आब्रह्मभुवनादिति । **ब्रह्मभुवनं मेरुस्थमत्र विवक्षितम् । जनोलोकोऽप्यनेन गृह्यते । आब्रह्मभुवनादेव आजनाच्चार्वाग्भवा एव लोकाः पुनरावर्तिनः, परे न पुनरावर्तिनः । तथापि नोक्तमयुक्तम् । यतस्तेषु लोकेषु स्थितं मामुपेत्यावस्थितस्य पुनर्जन्म न विद्यत इत्यर्थः । उक्तं च -**

---

१. 'आब्रह्मभवनाल्लोकाः' इति पा.

२. वक्ष्यति च 'यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' (८/२१); 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'(१५/६) इति । 'न च पुनरावर्तते न च पुनरावर्तते' इति श्रुतिः, 'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात्' इति च ब्रह्मसूत्रम् ।

"आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि ।
तथाऽप्यभावः सर्वत्र प्राप्यैव वसुदेवजम् ॥"[1]

**इति । मेरुस्थब्रह्मसदनमारभ्य जनलोकं चारभ्य परतः स्थितानां ब्रह्मज्ञानिनां न पुनरावृत्तिः । तथापि तेषु लोकेषु स्थितं भगवन्तमुपेत्याऽऽस्थितानामेव पुनरावृत्तिः । अथवा - ब्रह्मभुवनमारभ्य लोकाः पुनरावर्तिनः अल्पजन्मादिमन्तः, मामुपेत्यावस्थितस्य मुक्तस्यांशतोऽपि पुनर्जन्म न विद्यत इति । उक्तं च -**

**"नियमाज्जन्मनोऽभावो मुक्तस्यैव तथापि तु ।
महर्लोकमतीतानां न जन्मांशलयौ विना ।
तत्राप्यवश्यं तत्स्थानं तैः क्षिप्रं पुनराप्यते ॥"[2] इति ॥१६॥**

**(रा)** ब्रह्मादीन् प्राप्तानामपि पुनर्जन्माभावात् किं विशिष्योच्यते 'मामुपेत्य' इत्यादि । तत्राह - **आब्रह्मेति** । 'आङ्' अत्राभिविधौ । मेरुस्थब्रह्मसदनादारभ्यार्वाक्तनाः लोकाः तत्र गताः जना इति यावत् । **पुनरावर्तिनः** पुनर्भूमावागत्य जन्मादिमन्तो भवन्तीत्यर्थः । ननु मेरुस्थब्रह्मसदनादारभ्यार्वाक्तनलोकस्थाः पुनरावर्तिन इत्युक्त्वा अर्थात् 'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि' इति स्मृत्या च तत उपरितनलोकस्थाः न पुनरावर्तिन इति प्राप्तत्वात् मामुपेत्य पुनर्जन्म नाप्नुवन्तीति कथमुच्यत इत्यतस्तदेव पुनराह - **मामिति** । सत्यम् । मेरुस्थब्रह्मसदनाज्जनोलोकाच्चोपरिस्थितानां जनिर्नेति । तथाऽपि तल्लोकस्थत्वमात्रं न जन्माभावे प्रयोजकम्, किन्तु तत्र स्थितं मामुपेत्य स्थितानामेव जन्म पुनर्न विद्यते । अतः प्रागुक्तं नायुक्तमिति भावः । तदुक्तम् - 'तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजम्' इति । अभावः जननाभाव इत्यर्थः ।

यत्तु 'आजनान्न जनिर्भुवि' इति जनोलोकादुपरिस्थितानामप्यपुनरावृत्त्युक्तेः ब्रह्मसदनादर्वाक् स्थिताः पुनरावर्तिनस्तदुपरिस्थारपुनरावर्तिन इत्युक्तिरयुक्तेति चोद्यम्, तद्ब्रह्मभुवनपदेन मेरुस्थब्रह्मसदनग्रहणात् परिहृतम् । सत्यलोकस्थब्रह्म-

---

१. नारायणगोपालकल्पवचनम् - गी.भा.

२. पाद्मवचनम् - गी.भा.

सदनग्रहणेऽपि आब्रह्मभुवनात् सत्यलोकस्थब्रह्मसदनादर्वाक्तनतपोलोकस्थजना अंशेन पुनरावर्तिन इत्यर्थः । नच 'आजनात्' इति वचनविरोधः । तत्र स्मृतौ जनिर्नेत्यस्य कात्स्न्र्येन जनिर्नेत्यर्थकत्वात् । जनादिलोकस्थानामप्यंशेनापि भूमौ लयान्ते लयादौ च कात्स्न्र्येन जनिमृत्योर्भावात् । 'आब्रह्मभुवनात्' इत्यत्र तत उपरि आर्थिकजन्माभावोक्तिस्तु मुक्तजन्माद्यभावोपेतमुक्तजनविषया । तेषामंशेनापि भूमौ जननाद्यभावादिति । एतेन 'आमेरुब्रह्मसदनादाजनात्' इति स्मृत्या मेरुजनान्तरालिकानां जन्माजन्मनोरर्थात् प्राप्तेर्विरोध इति प्रत्युक्तम् । अजनेर्मुक्तविषयत्वात्, जनेरुक्तदिशा मुक्तेतरविषयत्वादिति । तदुक्तम् - 'नियमाज्जन्मनोऽभावो मुक्तस्यैव' इत्यादि ॥१६॥

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥**

**(वि)** मत्प्राप्तावेवापुनरावृत्तिरित्युक्तस्थापनायाशेषसृष्टिप्रलयादिकर्तृत्वमात्मनो दर्शयति - सहस्रेत्यादिना । सहस्रशब्दोऽत्र बहुत्ववाची । ब्रह्मणः परब्रह्मणः ।

"अनेकयुगपर्यन्तमहर्विष्णोस्तथा निशा ।
रात्र्यादौ लीयते सर्वमहरादौ च जायते ॥"[1]

इति वचनात् । निर्विकारस्य विष्णो रात्राविव प्रलयकाले प्रवृत्त्यभावादन्यदा प्रवृत्तिसद्भावात् प्रलयादिकालो रात्र्यादित्वेनोपचर्यते । तदुक्तम् -

"नित्यस्यापि हरेः [2]कालो द्विपरार्धात्मकस्त्वयम् ।
अहश्चासौ निमेषश्चेत्यप्रवृत्त्योपचर्यते ॥"[3] इति ॥१७॥

**(रा)** मत्प्राप्तावेवापुनरावृत्तिरिति प्रतिज्ञामात्रेणोक्तस्य स्थापनायादौ सृष्टिप्रलयादिकर्तृत्वमात्मनो वक्तुम् उपोद्घातमाह - सहस्रेति । सहस्रशब्दोऽत्र

---

१. महाकौर्मवचनम् ।(श्लो.२०) - गी.भा.

२. कालोऽयं द्विपरार्धाख्यो निमेष उपचर्यते ।
अव्याकृतस्यानन्तस्य अनादेर्जगदात्मनः ॥ -भाग (३/११/३७)

३. गी.ता. उदाहृतप्रमाणवचनम् ।

बहुशाब्दपर्यायः । **ये जनाः । यत्** परब्रह्मणोऽह्नः तद्बहुयुगपर्यन्तं द्विपरार्धात्मकम् । **विदुर्जा**नन्ति । **ब्रह्मणः** परब्रह्मणः । **रात्रिं च युगसहस्रान्तां** बहुयुगान्तां द्विपरार्धात्मिकां विदुः । तेऽहोरात्रविद इत्यर्थः । यदित्यस्य य इति वाऽर्थः । स इति शेषो वा । परब्रह्मणः कूटस्थनित्यस्यापि सृष्ट्यादिसव्यापार-निर्व्यापारावस्थयोरुपचारादहोरात्रत्वोक्तिः ॥१७॥

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसञ्ज्ञके ॥१८॥**

**(वि) अव्यक्ताद्विष्णोः । व्यक्तयो गुणवैषम्यादयः । तत्रैव विष्णावेव ॥**

**(रा)** ततः किमित्यत आह - **अव्यक्तादि**ति । ब्रह्मणोऽ**हरागमे** । महाप्रलयान्त इति यावत् । **अव्यक्तात्** भगवतः । व्यज्यन्त इति **व्यक्तयः**, गुणवैषम्यादयः कार्यपदार्थाः । **प्रभवन्ति** उत्पद्यन्ते । **रात्र्यागमेऽव्यक्तसञ्ज्ञके** । **तत्रैव** भगवति **प्रलीयन्ते** ॥१८॥

**[1]भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥१९॥**

**(वि) भूतग्रामो भूतसमूहः । अवशो विष्णुवशः ॥१९॥**

**(रा)** महामहिमत्वख्यापनाय सृष्टिप्रलययोरविच्छेदमाह **भूते**ति । प्राग्जन्म-लयवत्त्वेनोक्तो यः **स एवायं भूतग्राम**श्चराचरसमुदायः । ब्रह्मणो**ऽहरागमे** प्रत्यहमिति यावत् । प्रभवति । **भूत्वा भूत्वा** चोत्पद्योत्पद्य । **रात्र्यागमेऽवशो** भगवद्वशः सन् **प्रलीयते** । भूतग्रामो भूत्वा भूत्वा रात्र्यागमे प्रलीयते पुनरहरागमे प्रभवतीति वा योजना ॥१९॥

**परस्तस्मात् तु [2]भावोऽन्योऽव्यक्तो व्यक्तात् सनातनः ।**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥**

---

१. 'ब्रह्मादयोः हि भूतानि' इत्युक्तेः भूतग्रामः ब्रह्मादिचराचरसमुदाय इत्युक्तं भवति ।
२. 'भावोऽन्योऽव्यक्तोऽव्यक्तात्' इति पा. ।

(वि) पर उत्तमः । भावः स्वतन्त्रः पदार्थः ।

'सृष्टिस्थितिश्च संहारो भावनं समुदाहृतम् ।
तद्यः करोति पुरुषः स भाव इति कीर्तितः ॥'

इति वचनात् । अव्यक्तात् तस्माद्व्यक्तादन्यः । 'यः सर्वेषु'[1] इत्यव्यक्तत्वोपपादनम् ॥२०॥

(रा) भगवतोऽहोरात्रोक्त्या तस्यापि जगत इवान्यस्मादुत्पत्तिलयौ स्त इत्यतो नेत्याह - पर इत्यादिद्वाभ्याम् । अव्यक्तस्तु भगवांस्तु तस्मात् प्रभवप्रलयोपेतात् व्यक्तात् भूतग्रामात् । अन्यो विलक्षणः । भावः स्वतन्त्रः । परः उत्तमः । सनातनोऽनादिश्च यो भगवान् सर्वेषु भूतेषु नश्यत्सु न विनश्यति।

अव्यक्तोऽक्षर[2] इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य [3]न निवर्तन्ते तद्धाम परमं मम ॥२१॥

(वि) धाम स्वरूपम् । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते'[4] इत्यभिधानात् ॥२१॥

(रा) सर्वात्मना नाशाभावादेव अव्यक्तो भगवानक्षरः इत्युक्तः । 'तस्मादक्षरं तस्मादक्षरम्' इति श्रुत्यादौ । तां परमां गतिमाहुः । तामिति विधेयापेक्षया स्त्रीलिङ्गता । कुतोऽव्यक्तो भगवान् परमप्राप्य इत्यत आह - यं प्राप्येति । तन्मम धाम । स्वरूपमित्यर्थः ॥२१॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

(वि) 'भक्त्या युक्तः' इत्यादिना भक्तेः साधनान्तरैः सह साधनत्वमुक्तम्। तत्र साधनान्तरसाम्यशङ्कानिरासाय भक्तिरेव परमं साधनमित्याह - पुरुष इति । यस्य स इति सम्बन्धः ॥२२॥

---

१. 'यः स सर्वेषु भूतेषु' इति गी.भा.

२. क्षेत्रज्ञो अक्षर एव च ॥ इति विष्णुसहस्रनामसु । 'अक्षरं परमं ब्रह्म' इति ह्युक्तम् ।

३. 'न च पुनरावर्तते नच पुनरावर्तते' इति छां.उ.; ४. अभिधानवचनम् । - गी.भा.

(रा) 'भक्त्या युक्तो योगबलेन चैव'[1] इत्यत्र साधनान्तरैः सह भगवत्प्राप्तिसाधनत्वं भक्तेरुक्तम् । तत्र साधनान्तरसाम्यशङ्कानिरासाय भक्तेरेव परमसाधनत्वमिति भावेनाह - **पुरुष इति । भूतानि यस्यान्तःस्थानि । सर्वमिदं जगत् येन ततं** व्याप्तं **स परमः पुरुषः** भगवान् । **अनन्यया**ऽन्यासाधारणया **तु । भक्त्या लभ्यः** प्राप्य इत्यर्थः । अत्र परमयेत्यनुक्तावपि पुनर्वचनबलादेव परमत्वलाभ इति भावः । उक्तं हि 'ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ'[2] इति सूत्रे भक्तेः प्राधान्यम् ॥२२॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥२३॥**

(वि) **भगवन्तं प्राप्तानामपुनरावृत्तिरित्युक्तम् । तत्रापुनरावृत्तिमतामन्येषां च केन पथा गमनमित्यपेक्षायामाह** - यत्रेत्यादिना । **यत्र कालाद्यभिमानिदेवतासु मृत्यनन्तरं प्रयाता आवृत्तिमनावृत्तिं च यान्ति । कालं कालाद्यभिमानिदेवताम् । वक्ष्यामि ॥२३॥**

(रा) भगवन्तं प्राप्तानामन्येषां चापुनरावृत्तिपुनरावृत्ती कथिते । तत्र यद्देवताधिष्ठितमार्गाभ्यां गतानामपुनरावृत्तिपुनरावृत्ती भवतः । ता देवता प्रतिज्ञापूर्वकमाह - **यत्रेत्यादित्रयेण । काल** इति । **यत्र** कालाभिमानिदेवताधिष्ठितमार्गे कालानभिमानिदेवताधिष्ठितमार्गे च । **प्रयाता योगिनः अनावृत्तिमावृत्तिं च यान्ति तं कालम्** । तत्कालाभिमानिदेवता अन्यदेवताश्च वक्ष्यामीत्यर्थः ॥२३॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥**

(वि) **अग्निर्ज्योतिर्धूमानामकालाभिमानित्वेऽपि कालप्राचुर्यात् तत्साहचर्येण कालत्वमुपचर्यते । ज्योतिरर्चिः । अहरभिजित्सहितम् ।**

---

१. गी. (८/१०)
२. ब्र.सू. (३-३-५४)

**शुक्लः पूर्णमास्या युक्तः । अयनं विषुवेण सह स्थितम् । मासाभिमानिभ्योऽप्ययनाभिमानी पृथक् । तत्र प्रयाता ब्रह्मविदो ब्रह्म गच्छन्ति । उक्तं च -**

**'अग्निर्ज्योतिरिति द्वेधा वह्नेः पुत्रो व्यवस्थितः ।**
**तं प्राप्य यान्ति ब्रह्मिष्ठा दिवसाद्यभिमानिनः ॥'[1]**

**इति । तथा-**

**'साह्ना मध्यन्दिनेनाथ शुक्लेन च स पूर्णिमा ।**
**सविष्वा चायनेनासौ पूजितः केशवं व्रजेत् ।'[2]**
**'पूजितस्त्वयनेनासौ मासैः परिवृतेन ह ॥'[3] इति च ॥२४॥**

**(रा)** ता देवता उद्देशेनाह **अग्निरिति** । अग्निनामकदेवता । **ज्योतिरिति** अर्चिर्नामकदेवता । **अहरहरभिमानिदेवता** । अभिजिद्देवतासहितेत्यपि ध्येयम् । शुक्लः शुक्लपक्षाभिमानिनी । पौर्णमास्यभिमानिना सहेति ग्राह्यम् । षण्मासाभिमानिनी, उत्तरायणाभिमानिनी । विष्वभिमानिना सहेति ज्ञेयम् । **तत्र** क्रमेण निर्दिष्टाग्न्यादिदेवताऽधिष्ठितमार्गे **प्रयाताः ब्रह्मविदो जनाः ब्रह्म गच्छन्ति** ॥२४॥

**धूमो [4]रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥**

**(वि) योगी कर्मयोगी धूमादिदेवतामार्गे गत्वा चन्द्रं प्राप्य निवर्तते। स्मरणनिमित्ते चैते गती इति दर्शयितुं ब्रह्मविदो योगीति विशेषणम् । उक्तं च -**

**'गत्यनुस्मरणाद्ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।**
**अननुस्मरणात् काले स्मरणं प्राप्य वै गतिः ॥'[5]**

---

१. सत्तत्त्ववचनम् - गी.ता.

२. ब्रह्मवैवर्तवचनम् । - गी.भा.; ३. गारुडवचनम् । - गी.भा.

४. 'निशि नेति चेन्न सम्बन्धात्' (ब्र.सू. ४/२/१९) 'रश्म्यभावान्निशि ज्ञानिन उत्क्रमणं न युक्तमिति चेन्न । सर्वदा सम्बन्धाद्रश्मीनाम्' इति तद्भाष्ये ।

५. अध्यात्मवचनम् - ब्र.सू.भा. (४-२-२२)

इति । तत्कालमरणविवक्षायामग्निर्ज्योतिर्धूमानामयोगः । 'अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यं सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति । तस्माद्ब्रह्मणो महिमानमाप्नोति[1]' इति विदुषो [2]दक्षिणायनमरणेऽप्यपुनरावृत्त्या ब्रह्मप्राप्तिश्रुत्या सा न विरुद्ध्यते । उक्तं च -

'शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः ।
तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ॥
ते सर्वे देहसम्बद्धा सर्वदा सर्वदेहिनाम् ।
महर्लोकादिगन्तार उत्तरायणरश्मिभिः ॥
निर्गच्छन्तीतरैश्चापि यैरेष्टव्येतरा गतिः ।
उत्तरं दक्षिणमिति त एव तु निगद्यते ॥
न तु कालविशेषोऽस्ति ज्ञानिनां नियमात् फलम् ।
ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ।
अत्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालतः ॥'[3] इति ॥२५॥

(रा) धूम इत्यादि धूमाद्यभिमानिदेवतानिर्देशः । तत्र धूमादिदेवताऽधिष्ठितमार्गे प्रयाता इति योज्यम् । योगी कर्मयोगी । पूर्वत्र 'ब्रह्मविदः' इति अत्र 'योगी' इति विशेषणाच्च क्रमात् मार्गद्वयस्य ज्ञानकर्मसाध्यत्वमुक्तं ध्येयम् । एतच्च मार्गद्वयमन्तकाले तद्विषयस्मृतिमतामेवेति ज्ञेयम् । तदाह सूत्रे 'ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ'[4] इति ॥२५॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्यया ऽऽवर्तते पुनः ॥२६॥**

---

१. गी.ता. उदाहृतप्रमाणवचनम् ।

२. अतश्चायनेऽपि हि दक्षिणे (ब्र.सू. ४/२/२१); 'दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायणे इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते ।' इत्यादि तद्भाष्ये ॥

३. नारायणाध्यात्मवचनम् - ब्र.सू.भा.(४/२/२१)

४. ब्र.सू. (४-२-२२)

**(वि) उक्तौ मार्गौ निगमयति - शुक्लकृष्णेति । ज्ञानकर्मसम्बन्धिन्यौ शाश्वते शाश्वत्यौ अनादिसंसिद्धे एते गती एकयाऽनावृत्तिं याति अन्यया पुनरावर्तते ।।२६।।**

**(रा)** उक्तौ मार्गौ निगमयति - **शुक्लेति । एते** प्रागुक्ते । **शुक्लकृष्णे गती** मार्गौ । **जगतः** ज्ञानकर्मयोगिजगत्सम्बन्धिनौ । **शाश्वते** शाश्वत्यौ **मते । एकया** गतः **अनावृत्तिं याति । अन्यया** गतः **पुनरावर्तत** इति ।।२६।।

**नैते सृती पार्थ [१]जानन् [२]योगी मुह्यति कश्चन ।**
**तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ।।२७।।**

**(वि) मार्गकथनस्य प्रयोजनमाह** - नैत इति । **योगी ब्रह्मसाक्षात्कारोपायवान् । एते गती मार्गौ जानन् । साक्षात् कुर्वन्न मुह्यति । तस्मात् सदा भक्तियुक्तो भव ।।२७।।**

**(रा)** मार्गयोरुक्तेः फलमाह - **नैत इति । हे पार्थ एते** प्रागुक्ते । **सृती** मार्गौ । **जानन् योगी** सृत्युपायभूतज्ञानकर्मानुष्ठानवान् । यद्वा - **योगी** ब्रह्मापरोक्षज्ञानवान् । **एते सृती** । **जानन्** साक्षात्कुर्वन् । **कश्चन** कोऽपि **न मुह्यति** । भगवद्विस्मृतिरूपमोहं न प्राप्नोति । **तस्मात्** योगस्य पुमर्थहेतुत्वात् । सर्वदा भगवज्ज्ञानभक्तिपूर्वं स्वोचितनिवृत्तकर्मानुष्ठानरूपोपाययुक्तो **भवेति** । द्विःसम्बोधनमादरार्थम् ।।२७।।

**[३]वेदेषु यज्ञेषु तपस्सु चैव**
**दानेषु यत् पुण्यफलं प्रदिष्टम् ।**

---

१. भक्तिमान् मार्गविन्नैव नीचां गतिमवाप्नुयात् ।। इति च । - भा.ता. ७/१६/५६

२. पितृयानं देवयानं ब्रह्मयानमिति त्रिधा ।
गच्छन् वैश्वानरं याति तस्मान्मार्गः स ईरितः ।। -भा.ता. २/२/२६
देवयानस्य मार्गस्था अहःशब्दाभिसञ्ज्ञिताः ।
पितृयानस्य मार्गस्था रात्रिशब्दाह्वया मताः -इति बृहत्तन्त्रे ।। -भा.ता. २/२/२७

३. वेदेषु यज्ञेषु तपस्सु चैव दानेषु तीर्थेषु व्रतेषु यच्च ।
इष्टेषु पूर्तेषु च यत्प्रदिष्टं पुण्यं स्मृते तत्खलु वासुदेवे ।। -कृ.म. ५५

**अत्येति तत्सर्वमिदं विदित्वा**
**योगी परं स्थानमुपैति चाद्यम् ॥२८॥**

**॥ इति श्रीमद्भगवद्गीतायामष्टमोऽध्यायः ॥**

**(वि) किंच वेदाध्ययनादि यत्पुण्यमुपदिष्टं तत्सर्वमपीदं मार्गादिकं विदित्वाऽतिक्रामति । आद्यं परं विष्णोः स्थानमुपैति । उक्तं च -**

**"मार्गौ ब्रह्म च यः पश्येत् साक्षादेवापरोक्षतः ।**
**सर्वपुण्यातिगोऽमुह्यन् यात्यसौ ब्रह्म तत्परम् ॥"[1] इति ॥२८॥**

॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीविद्याधिराजकृतायाम् अष्टमोऽध्यायः ॥८॥

**(रा)** अध्यायार्थं फलोक्त्योपसंहरति - **वेदेष्विति** । वेदाध्ययनयज्ञानुष्ठानकृच्छ्रादितपश्चरणेषु **यदेव पुण्यफलं प्रदिष्टं** निर्दिष्टमस्ति तत्सर्वमेवेति वा एवशब्दान्वयः । इदम् अध्यात्मादिस्वरूपं भगवतोऽशेषस्रष्टृत्वं शुक्लकृष्णमार्गादिकं च प्रागुक्तम् । **विदित्वाऽत्येति** अतिक्रामति । ततोऽतिशयितफलवान् भवति । किं तदित्यत आह - **योगीति** । ज्ञानोपायवान् । **आद्यं परं स्थानं** विष्णोः स्थानम् । **उपैति** चेति । यद्वा -

"मार्गौ ब्रह्म च यः पश्येत् साक्षादेवापरोक्षतः ।
सर्वपुण्यातिगोऽमुह्यन् यात्यसौ ब्रह्म तत्परम् ॥"

इत्युक्तदिशा मार्गब्रह्ममात्रपरामर्शकोऽत्रेदं शब्दः । **विदित्वा** इत्यस्य साक्षात्कृत्वेत्यर्थः ॥२८॥

॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते अष्टमोऽध्यायः ॥

*****

---

१. गी.ता. उदाहृतप्रमाणवचनम्

# [1]नवमोऽध्यायः

**श्रीभगवानुवाच**

**इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे[2] ।**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१॥**

**(वि) सप्तमाध्यायोक्तमेव भगवन्महिमानम् अष्टमे प्रसङ्गादागतं प्रश्नपरिहारं समाप्य नवमे प्रपञ्चयति । अतिविचित्रं भगवन्महिमानं वक्तुं प्रतिज्ञाय प्रशंसति - इदं तु इत्यादिना । अतिशयेन गोप्यम् । अनसूयवे दोषदृष्टिरहिताय । अशुभात् संसारात् ॥१॥**

**(रा)** सप्तमेऽध्याये 'साधिभूताधिदैवं मां साधियज्ञं च ये विदुः'[3] इत्यादिनोक्तं भगवन्माहात्म्यमत्राध्याये प्रपञ्च्यते । न चैवं तदानन्तर्यमेवास्य शङ्क्यम् । अध्यात्मादिपदानां निरूपणेन परिहारोक्त्यनन्तरमेवात्र साधिभूतादिवाक्यार्थभूतभगवन्माहात्म्यवर्णनस्यावसरादिति ध्येयम् । अतिचित्रमहिमानं वक्तुं तत्रादरजननाय प्रतिज्ञापूर्वं वक्ष्यमाणं प्रशंसति - **इदं त्विति** । **गुह्यतमम्** अतिगोप्यम् । **इदं** वक्ष्यमाणं **ज्ञानम्** । कर्मणि ल्युट् । ज्ञातव्यं विशेषेण ज्ञातव्यसहितम् । **अनसूयवे** असूयादिदोषहीनाय । एवंरूप एवाधिकारीति ज्ञापनायैतद्विशेषणोक्तिः । **ते** तुभ्यं **प्रवक्ष्यामि** । **यज्ज्ञात्वा अशुभान्मोक्ष्यसे** । यच्छब्दस्येदं त्वित्यनेनान्वयः ॥१॥

**राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥२॥**

---

१. सप्तमाध्यायोक्तं स्पष्टयत्यस्मिन्नध्याये । - गी.भा.
सप्तमोक्तं प्रपञ्चयति । -गी.ता.

२. अनेनार्जुनस्य एकलव्ये दोषरूपमात्सर्यं नासीदिति ज्ञायते ।
उक्तं च भागवततात्पर्ये -सतां मात्सर्यमर्जुनस्यैकलव्य इव कुत्रचिद् दृश्यते ।
तद्वर्जनीयमुत्तमेषु ज्ञानार्थिना -इत्यादि

३. गी. (७-३०)

**(वि) राजविद्या प्रधानविद्या, राजगुह्यं प्रधानगोप्यम् । 'अक्षेष्विन्द्रियेषु प्रति प्रति स्थित इति प्रत्यक्षो भगवान् । स प्रत्यक्षः प्रति हि सोऽक्षेषु[१]' इति श्रुतेः । सोऽवगम्यते येन तत् प्रत्यक्षावगमम् । अनेनापरोक्षज्ञानसाधनत्वमुक्तम्। सर्वजगतो धारक इति धर्मो भगवान् । 'पृथिवी धर्ममूर्धनी[२]' इति प्रयोगात् । तद्विषयं धर्म्यम् । परोक्षज्ञानसाधनम् । सुसुखं सुखेन कर्तुं शक्यम् ॥**

**(रा)** पुनः प्रशंसति - **राजेति** । इदं वक्ष्यमाणं **राजविद्या** । राज्ञी चासौ विद्या च राजविद्या । विद्यानां प्रधानविद्येत्यर्थः । **राजगुह्यं** गुह्यानां गोप्यानां मध्ये प्रधानगोप्यम् । **पवित्रं** पावित्र्यहेतुम् । अत **एवोत्तमम्** । **प्रत्यक्षावगमम्** अक्षेपु प्रति प्रति स्थितः प्रत्यक्षो भगवान् । 'कुगतिप्रादयः[३]' इति प्रादिसमासो नाव्ययीभावः । अवगम्यते साक्षात् क्रियते येन तत् अवगमम् । 'ग्रहवृद्दनिश्चिगमश्च[४]' इति करणे गमेरप्प्रत्ययः । प्रत्यक्षस्य हरेरवगमं प्रत्यक्षावगमं सर्वेन्द्रियप्रेरकभगवदपरोक्षज्ञानसाधनम् । **धर्म्यं** सर्वधारकत्वाद्धर्मो भगवान् । 'धृञ् धारणे' इत्यतः औणादिको मन् प्रत्ययः । धर्मादनपेतं तद्विषयं धर्म्यम् । सर्वधारकभगवद्विपयपरोक्षज्ञानं भगवदपरोक्षज्ञप्तिसाधनम् । **अव्ययम्** अक्षयमोक्षफलकम् । **कर्तुं** सम्पादयितुम् । **सुसुखम्** अत्यन्तसुलभमित्यर्थः । 'प्रवक्ष्यामि' इति पूर्वेणान्वयः ॥२॥

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥**

**(वि) सुकरत्वे न कोऽपि संसारयोग्य** इत्यत्राह - अश्रद्दधाना इति । **श्रद्धाऽऽस्तिक्यम् । 'श्रन्नामास्तिक्यमुच्यते'[५] इत्यभिधानात् । श्रद्धधाना**

---

१. सामवेदव्वारुणशाखावचनम् । - गी.भा.
२. मोक्षधर्मवचनम् । - गी.भा.
३. पा.सू. २/२/१८
४. पा.सू. ३/३/५८
५. ब्रह्माण्डवचनम् - भा.ता. ११-३-२७

**नेत्यश्रद्दधानाः । अस्य धर्मस्य । इमं धर्ममास्तिक्येनास्वीकुर्वन्तो मृत्युरूपसंसारमार्गे नितरां वर्तते ॥३॥**

**(रा)** ननु त्वयोच्यमानं भगवदपरोक्षज्ञप्तिसाधनं तद्विषयपरोक्षज्ञानम् उक्तगुणकं सुकरं चेन्न कोऽपि संसारी स्यादित्यतो वा, अकुर्वतां किमनिष्टमित्यतो वाऽऽह - **अश्रद्दधाना इति ।** [१]**धर्मस्य** भगवद्विषयस्य । **अस्य** ज्ञानस्य । **अश्रद्दधानाः** पुमर्थहेतुत्वरूपश्रद्धाविहीनाः । **पुरुषाः मामप्राप्य मृत्युसंसारवर्त्मनि निवर्तन्ते** नितरां वर्तन्ते । पतन्तीत्यर्थः ॥३॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥**

**(वि) प्रतिज्ञातं ज्ञानमाह -** मया ततमिति । **सर्वव्यापी चेत् किमिति तथा न दृश्यत इत्यत आह -** अव्यक्तमूर्तिनेति **॥४॥**

**(रा)** यस्य धर्म्यपदेन प्रत्यक्षावगमपदोक्तभगवज्ज्ञानसाधनत्वमुक्तम्, यच्च प्रवक्ष्यामीति प्रतिज्ञातम्, यच्च 'ज्ञात्वा' इत्यादिना प्रशंसितम्, यदकरणे च निन्दा कृता तज्ज्ञानविज्ञानयोर्मध्ये ज्ञानशब्दितं ज्ञातव्यं तावदाह - **'मया'** इत्यादिना **'अहं क्रतुः'**[२] इति पर्यन्तेन**। इदं सर्वं** चराचरात्मकम्। **जगदव्यक्तमूर्तिना ।** बहुव्रीहिः । **मया ततं** व्याप्तम् । व्याप्तत्वे सर्वत्र कुतो न दृश्यत इत्यतोऽव्यक्तेति विशेषणम् । 'ततम्' इत्युक्त्या जगत आधारता स्वस्याधेयता घटादेरिव प्राप्ता । तां निराह - **मत्स्थानीति ।** मदाधारतयैव **सर्वभूतानि** सजडजीवजातानि । **तेषु चाहं नावस्थितः** । तदाधारतया तदुपजीवनेन न वर्त इत्यर्थः ॥४॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥५॥**

---

१. 'धर्म्यस्य' इति क्वचित् ।
२. गी. (९-१६)

(वि) **मत्स्थान्यपि यथा पृथिव्यां स्पृष्ट्वा स्थितानि न तथा मयीत्याह - न चेति । तत्र हेतुः- ऐश्वरम् ईश्वरस्वभावं योगं सामर्थ्यं पश्येति । अचिन्त्यशक्तित्वादसङ्गत्वादिति भावः । 'युज्यतेऽनेन योगोऽसौ उपायः शक्तिरेव च' इत्यभिधानम् । अव्यक्तमूर्तिनेति । भगवतो मूर्तिरुक्ता, सा अस्मदादीनामिव भिन्नेति भ्रान्तिनिरासाय स्वदेहस्यापि लक्षणमाह -** [१]भूतभृदिति । **ममात्मा देह एव** [२]**भूतभावनः । तदनन्यत्वाद्देहस्याचेतनत्वशङ्कानिवृत्तये ममात्मेत्याह ॥५॥**

**(रा)** त्वयि चेद्भूतानि तिष्ठन्ति भूतले वर्तामहे भूतलशैत्यादिनाऽहं शीतो भवामीति ज्ञानमिव भगवति वयं वर्तामह इति धीः स्यात् । तथा वह्न्याद्यौष्णशैत्याभ्यां भूतलादेरौष्ण्यशैत्यवत् अन्योन्यधर्मसङ्क्रान्तिश्च स्यादित्यत आह - **नच मत्स्थानीति** । त्वगिन्द्रियेण तं ज्ञात्वाऽन्योन्यधर्मसङ्क्रान्तिं चासाद्य न तिष्ठन्ति । भगवतः प्राकृतस्पर्शरहितत्वात् । 'अशब्दमसस्पर्श-मरूपम्'[३] इत्यादि श्रुतेः । 'न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च'[४] इति स्मृतेः । भूताधारोऽपि कथं तदनाधार इत्यत उक्तम् - **पश्येत्यादि । ऐश्वरम्** ईश्वरसम्बन्धिनम् । **मे योगं** सामर्थ्यम् । 'योगोऽसावुपायः शक्तिरेव च' इति वचनात् । **पश्य** मम तादृशीं शक्तिमित्यर्थः । पूर्वत्र 'अव्यक्तमूर्तिना' इति मूर्तावुक्तायां साऽस्मदादीनामिव भिन्नेति भ्रान्तिनिरासाय स्वलक्षणं भूताधारत्वादिकं स्वदेहस्याप्याह - **भूतभृदिति । भूतभावनः** भूतानामुत्पत्तिकर्ता । **ममात्मा** मम देहः, अहमिव । **भूतभृत् भूतस्थश्च न** भवति, इत्यर्थः । अत्र 'मम देह' इति वक्तव्ये 'ममात्मा' इत्युक्तिः अचेतनस्य देहस्य कथं भगवल्लक्षणं स्यादिति शङ्का स्यात्, तन्निवृत्तये तस्य चेतनत्वं पृथग्वाच्यं स्यात् । आत्मपदप्रयोगे तु देहत्वं चेतनत्वं द्वयमप्युक्तं स्यात् । आत्मपदस्य देहचेतनरूपोभयार्थत्वादिति ॥५॥

---

१. 'भूतकृद्भूतभृद्भावः' - इति विष्णुसहस्रनामसु ।
२. 'भूतात्मा भूतभावनः' - इति विष्णुसहस्रनामसु ।
३. कठ ३-१५
४. भारते मोक्षधर्मे(शान्ति.३३८/१७४,१७५)

**यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥६॥**

**(वि) असङ्गत्वेन परमात्मनो भूताधारत्वं दृष्टान्तेनोपपादयति - यथेति। आकाशस्थितोऽपि वायुर्यथा स्पर्शादि नाप्नोति तथा मयि स्थितमपि जगदित्यर्थः ॥६॥**

**(रा)** भगवतः सर्वाधारत्वेऽप्यन्योन्यधर्मासङ्क्रान्त्यादिरसम्भावित इत्यतो दृष्टान्तेन तदुपपादयति - **यथेति** । अवकाशं विनाऽवस्थित्ययोगात् नित्यमाकाशे **स्थितो महान् वायुः सर्वत्रगो**ऽपि तत्तद्धर्मान् न आप्नोति । शैत्यसौरभादिकं तु वायुसम्बद्धजलाद्यवयवगतमेव । न वायुगतम् । तथा **सर्वाणि भूतानि मत्स्थानि** नान्योन्यधर्मसङ्क्रान्तिमन्तीत्युपधारयेति ॥६॥

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥**

**(वि) ज्ञानप्रदर्शनार्थं प्रलयादिकारणत्वं प्रपञ्चयति- सर्वभूतानीत्यादिना । कल्पक्षये प्रलयकाले सर्वभूतानि, मदीयां त्रिगुणात्मिकां प्रकृतिम् यान्ति इति, तानि पुनः कल्पादौ विशेषेण सृजामि ॥७॥**

**(रा)** प्रतिज्ञातज्ञानप्रदर्शनाय 'मया' इत्यादिना हरेर्व्याप्तत्वसर्वाधारत्वाद्युक्त्वा, 'न च' इत्यादिश्लोकद्वयेन तदुपपाद्याधुना पुनः प्रतिज्ञातप्रदर्शनार्थं प्रलयादिकारणत्वमाह - **सर्वेति** । **कल्पक्षये** प्रलयकाले । **सर्वाणि भूतानि** सजडजीवजातानि । **मामिकां** मदधीनां त्रिगुणात्मिकाम् । **प्रकृतिं यान्ति** तत्र लीयन्ते । **पुनस्तानि** भूतानि । **कल्पादौ** । विशेषेण विविधतया चाहं **सृजामि** ॥७॥

**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥**

**(वि) न च प्रकृतिं विना सामर्थ्याभाव इत्युक्तम्- स्वामिति । तदुक्तम्-**

**"साधनानां साधनत्वं यदाऽऽत्माधीनमिष्यते ।**
**तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत् ॥"**

**इति । प्रकृतेर्वशात् । मायावशत्वादेवावशम् ॥८॥**

(रा) सृष्टौ प्रकृतेरनुक्तेः साधनानि विनैव सृष्टिं करोतीति प्रतीतिनिरासायोक्तं विवृणोति - **प्रकृतिम्** इति । **स्वां** स्वाधीनाम् । **प्रकृतिं** त्रिगुणात्मिकाम् । **अवष्टभ्य** उपादानतयाऽऽश्रित्य । **प्रकृतेर्वशात्** तदधीनत्वादवशं स्वानधीनम् ।

यद्वा - मदधीनप्रकृतिवशत्वादेव अकारवाच्यब्रह्मरूपमदधीनम् । **इमं कृत्स्नं भूतग्रामं पुनः पुनः विसृजामि** । प्रकृत्यादिसाधनावष्टम्भो, न तेन विना स्रष्टुमसामर्थ्यात् । किन्तु लीलयैव । प्रकृत्यादेः साधनताशक्तेर्मदायत्तत्वादिति ज्ञापनाय 'स्वाम्' इति विशेषणोक्तिः । तदुक्तं तदनन्यत्वनये "ॐ युक्तेः शब्दान्तराच्च ॐ"[१] इति सूत्रे ॥८॥

**न च मां तानि [२]कर्माणि निबध्नन्ति धनञ्जय[३] ।**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥९॥**

**(वि) सकलजगत्कर्तारमपि मां न निबध्नन्ति । कुतः उदासीनवदवस्थितं वस्तुतस्त्वनुदासीनम् । वस्त्वर्थं सादृश्यं विवृणोति -** असक्तमिति । **यस्यासक्त्यैव सर्वकर्मशक्तिः कुतस्तस्य कर्मबन्ध इति भावः ॥९॥**

(रा) ननु नानाविधां सृष्टिं कुर्वतस्तव जीवस्येव कर्मबन्धोऽस्ति किम्? इत्यतो नेत्याह - **नचेति । तानि** सृष्ट्यादीनि । **कर्माणि मां न निबध्नन्ति** । कुतः? उदासीनवदासीनम् । स्वत एव कर्तृत्वं न मायिकं चेत् कथमुदा-

---

१. ब्र.सू.(२-१-१९)

२. द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥ - भाग.

३. सर्वान् जनपदान् जित्वा वित्तमादाय केवलम् ।
मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् ॥ (भा.४/४४/१३ ) इति धनञ्जयनामार्थः

सीनतया वर्तनमित्यत उदासीनतयाऽऽसीनमित्यनुक्त्वा उदासीनवदित्युक्तम् । वस्तुतोऽनुदासीनोऽप्युदासीनसदृशतया वर्तमानमित्यर्थः । किं तत्सादृश्यमित्यत उक्तम् - **असक्तं तेषु कर्मस्विति** । उदासीनस्य यथा सक्तिर्नास्ति तथा ममापि तत्र सृष्ट्यादिकर्मणि सक्तिशब्दितस्यादरस्य आयासस्य वाऽभावान्न निबध्नन्ति इत्यर्थः ॥९॥

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते[1] ॥१०॥**

**(वि) जगत् प्रकृतिवशम्, त्वमुदासीनश्चेत् तर्हि प्रकृतेरेव स्वातन्त्र्यं प्राप्तमित्यत आह - मयेति । अध्यक्षो द्रष्टाऽधिपतिर्वा । 'अध्यक्षोऽधिपतिः प्रोक्तो यदक्षाण्यस्य चोपरि[2]' इत्यभिधानात् । अध्यक्षेण मया प्रयोजकेन । प्रकृतिः सचराचरम् सूयते जनयति । न केवलं प्रकृतिप्रसूतिद्रष्टृत्वम्। किन्तु, अनेन हेतुना कर्त्रा जगद्विपरिवर्तते पुनः पुनर्जायते ॥१०॥**

**(रा)** ननु पूर्वं 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इत्युक्त्या 'उदासीनवदासीनम्' इत्युक्त्या च निष्क्रियत्वं प्रतीयते । एवं तर्हि प्रकृतिरेव स्वातन्त्र्येण जगत् प्रसूयते, त्वयि तु प्रकृतिसन्निधानात् कर्तृत्वोपचारमात्रमित्यापन्नमित्यत आह - **मयेति** । यद्यप्येषा शङ्का 'मामिकाम्' इति 'स्वाम्' इति 'असक्तं तेषु कर्मसु' इत्युक्त्या निरस्ता । तथाऽपि स्वस्वातन्त्र्यं स्पष्टं वक्तुं प्रागुक्तपरिहाराच्छादनेनोक्तां शङ्कां हृदि कृत्वा 'मया' इति श्लोकेन पर्यहार्षीदिति ज्ञेयम् । **अध्यक्षेणेति** प्रतिपादकेन साक्षात्कारः, तृतीयया च कर्तृत्वमुच्यते ।

---

१. 'धाता यथा पूर्वमकल्पयत्'(ऋ १०-१९०-३) इति श्रुतिः ।

एवं नरोत्तमपरास्तु विमुक्तियोग्या अन्ये च संसृतिपरा असुरास्तमोगाः ।
एवं सदैव नियमः क्वचिदन्यथा न यावन्न पूर्तिरुत संसृतिगाः समस्ताः ॥
पूर्तिश्च नैव नियमाद्भविता हि यस्मात्तस्मात्समाप्तिमपि यान्ति न जीवसङ्घाः ।
आनन्त्यमेव गणशोऽस्ति यतो हि तेषामित्थं ततः सकलकालगता प्रवृत्तिः ॥

-म.भा.ता.नि. १/१८,१९

२. शब्दनिर्णयवचनम् । - गी.ता.

प्रकृतिहेतुकप्रसवं साक्षात्कुर्वता तत्प्रयोजनकर्त्रा च 'मया' इति दर्शनपूर्वकत्वात् प्रयोजकत्वस्यैवमुक्तिः। यद्वा - अध्यक्षेणाधिपतिना मया प्रकृतिः सचराचरं जगत् प्रसूयते जनयति । अनेन मत्प्रयोजितप्रकृतिरूपहेतुना दर्शनपूर्वकं मद्रूप-प्रयोजककर्तृरूपहेतुना च । जगत् विशेषेण परिवर्तते पुनः पुनर्जायते ॥१०॥

**अवजानन्ति मां मूढा [1]मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥**

**(वि) यद्येवंविधो भगवान् तर्हि कथं केचित्त्वामवजानन्ति, का च तेषां गतिरित्यत आह** - अवजानन्तीत्यादिना । **मानुषीं मनुष्यसदृशीम् । मूढैर्मनुष्यसदृशत्वेन प्रतीयमानां न तु मनुष्यरूपाम् तनुमाश्रितम् । अनन्यत्वेऽपि विशेषशक्त्या व्यञ्जयन्तं मामवजानन्ति । मूढाः तामसाः । भूतं सर्वदा विद्यमानम् । महान्तं व्यापिनमीश्वरम्[2] अनन्तगुणम् । भावं याथार्थ्यम् । अजानन्तः । अवज्ञानस्वरूपं प्रोक्तम्** -

**'ब्रह्मरुद्ररमादीनां साम्यदृष्टिरनन्यता ।**
**प्रादुर्भावगतस्यापि दोषदृष्टिरपूर्णता ।**
**धर्मदेहावतारादेर्भेददृष्टिश्च सङ्करः ।**
**अवतारेष्विति ज्ञेयमवज्ञानं जनार्दने ॥[3]' इत्यादिना ॥११॥**

**(रा)** यद्येवं भवान् जगतः सृष्टिस्थितिसंहाराणां कर्ता तर्हि कुतः केचित् त्वामवजानन्ति । अवज्ञानेऽपि तेषामनर्थाभावात् सर्वकर्ता अहमिति

---

१. त्रैगुण्यदेहेन्द्रियकमासुरा जानते हरिम् ।
त्रिगुणातीतमीशेशमतः पूर्णसुखं सुराः ।
जानन्ति गुणबद्धत्वाज्जीवानार्तांश्च कृत्स्नशः ।
अनार्तस्य प्रसादेन तेषामार्तिविनाशनम् । -इति चैतन्यविवेके ॥ -भा.ता. (१०/९४/२७)
पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः।
तथा न योगिराद्धान्तो ज्ञानं देहो यतो हरेः -इति षाड्गुण्ये। - भा.ता. (४/२२/४१)

२. अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि ।
तावदेवेश्वरो नाम तत्र भेदो हि न क्वचित् ॥ इत्यनुव्याख्यानोक्तेः ।

३. भविष्यत्पर्ववचनम् । - गी.ता.

प्रागुक्तमयुक्तमत आह - **अवजानन्ति** इत्यादि द्वयेन ॥ **मानुषीं तनुमाश्रितं** मानुषदेहमधिष्ठितोऽयमिति मूढलोकभ्रान्तिविषयं **मामिति** वा । अज्ञानामवज्ञानकारणतया मानुषीं मनुष्यदेहसादृश्येन प्रतीयमानां तनुम्, आश्रितमिति वाऽर्थः । एतेनात्र हरेः मानुषदेहोक्तेस्तस्य चाधारेणान्योन्यधर्मसङ्क्रान्त्यादेरवश्यम्भावात् 'भूतभृन्न च भूतस्थः' इति प्रागुक्तिरयुक्तेति निरस्तम् । तथा तनुतनुमतोरभेदेऽपि 'आश्रितम्' इत्युक्तिश्च चैत्रदेहश्चैत्राधीनो यथा तथा भगवद्देहोऽपि स्वाधीन इति स्वाधीनत्वगुणयोगाद्गौणीति 'ममात्मा' इत्यत्रत्याभेदोक्तिर्न विरुद्धेति ज्ञेयम् । एतादृशं **माम्** । **मूढाः** तामसाः । **भूतमहेश्वरं** भूतं सदा विद्यमानं महान्तमीश्वरं गुणपरिपूर्णम् । **परम्** उत्तमम् । **मम भावं** याथार्थ्यम् । **अजानन्तोऽवजानन्ति** अवमतया जानन्ति । 'ब्रह्मरुद्रमादीनां साम्यदृष्टिः' इत्यादितात्पर्योक्तदिशा अन्यदप्यवज्ञानं ज्ञेयम् ॥११॥

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥१२॥**

**(वि) अवजानतां फलमाह - मोघाशा इति । वृथाशाः भगवद्वेषिभिराशासितमामुष्मिकं न किञ्चिदाप्यते । यज्ञादिकर्माणि च तेषां वृथेति मोघकर्माणः । मोघज्ञानाः । अन्येषामविद्यमानं मौढ्यमेव तेषां कुतो मौढ्येऽपि मिथ्याज्ञानं भवतु । प्रज्वलनात्मको द्वेषस्तु तेषां कुत इत्याशङ्क्य तत्र मूलकारणमाह - राक्षसीमिति । मोहिनीं बुद्धिभ्रंशकरीं राक्षसीमासुरीं च प्रकृतिं स्वभावमाश्रितास्तमोयोग्या मामवजानन्ति, इति सम्बन्धः । 'तानहं द्विषतः क्रूरान्'[1] इत्यादिना वक्ष्यमाणत्वात् । उक्तं च -**

**'सर्वं मोघं शुभं तस्य योऽवजानाति केशवम् ।**
**अधरं याति च तमः प्रादुर्भावगतोऽप्यतः ।**
**ज्ञेयः केवलचिद्देहो विदोषः पूर्णसद्गुणः ॥'[2] इति ।**

---

१. गी. (१६/१९) ;
२. भविष्यत्पर्ववचनम् - गी.ता.

**तथा -**

**"कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ।**
**मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ॥"[1]**

**तथा च -**

**"यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ।**
**कथं स न भवेद्द्वेष्य आलोकान्तस्य कस्यचित् ॥"**

**इत्यादि । "द्वेषाच्चैद्यादयो नृपाः"[2] इत्यादि भगवतो [3]भक्तप्रियत्वज्ञापनार्थं नित्यध्यानस्तुत्यर्थं चेत्यवगन्तव्यम् ॥१२॥**

**(रा)** अवजानतामनर्थाभावादिति हेतुरसिद्ध इति भावेन फलमाह **मोघेति । मोघाशाः** वृथाशाः भगवद्द्वेषिभिराशासितस्य सम्पदादेः प्राप्तावपि आमुष्मिकस्य न कस्यचिदाप्तिरित्यर्थः । **मोघकर्माणः** यज्ञादिकर्माणि च तेषां वृथैव । तत्त्वविषयकज्ञानं च तेषां वृथैवेति **मोघज्ञानाः** । ज्ञानस्य मोघत्वं नाम केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेनानुत्पत्तिरेव । 'ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ'[4]इति सूत्रात् । **विचेतसो** विरुद्धमनस्काः । किं बहुना । कोऽप्यामुष्मिकः पुमर्थो नास्त्यत एवेति ज्ञेयम् । 'द्वेषाच्चैद्यादयो नृपाः' इत्यादि नित्यध्यानस्तुत्याद्यर्थमिति भावः । ननु मौढ्यान्मिथ्याज्ञानमस्तु । प्रज्वलनात्मको द्वेषः कुत इत्यतो वा, अन्येषामविद्यमानं मौढ्यमेव तेषां कुत इत्यतो वा तस्य मूलकारणमाह - **राक्षसीमिति । मोहिनीं** बुद्धिभ्रंशकरीम् । **आसुरीम्** असुरसम्बन्धिनीम् । **प्रकृतिं** स्वभावम् । **आश्रिताः** तमोयोग्याः मामवजानन्तीति पूर्वेणान्वयः ॥१२॥

---

१. मोक्षधर्मवचनम् (म.भा. शान्ति ३४६/६,७) - गी.भा.(९/१२)

२. भाग.(७/१/३२)

३. विद्वेषिजीवकृतसङ्गमपि स्वभक्तं कृष्णो व्यमोचयदहो करुणाम्बुराशिः ।
किं नाम तद्रहितभक्तजनानिति स्म कैमुत्यमूहयत सत्यवतीसुतोक्त्या ॥
- रुक्मिणीशविजये (२/५८)

४. ब्र.सू. (३-४-३४)

**महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥१३॥**

**(वि) भगवतो द्वेष्यत्वादेवावजानन्तीति किं न स्यादित्यतस्तथात्वे** देवप्रकृतयोऽप्यवज्ञां कुर्युः । न च तदस्तीत्याह - महात्मान इति । **महापुरुषाः दैवं स्वभावमाश्रिताः अनन्यचित्ताः मां भूतादिमव्ययं ज्ञात्वा भजन्ति ॥१३॥**

**(रा)** ननु भगवतो दोषित्वादेवावजानन्तीति किं न स्यात् । तथात्वे दैवप्रकृतयोऽप्यवज्ञां कुर्युः । न चैवमस्तीत्याह - **महात्मानस्त्विति । दैवीं** मुक्तियोग्योत्तमजीवसम्बन्धिनीम् । **प्रकृतिं** स्वभावम् । **आश्रिताः महात्मानो** महामनस्कास्तु । **भूतादिं** भूतानां कारणम् । **अव्ययं** चतुर्विधनाशहीनम् । **मां ज्ञात्वाऽनन्यमनसो**ऽन्यविषयकमनोहीना मदेकमनस्काः सन्तः । मां भजन्ति सेवन्ते ॥१३॥

**सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥**

**(वि) भजनप्रकारमाह** - सततमित्यादिना । **केचिद्दृढनियमाः नामोच्चारणं कुर्वन्तो भक्त्या मामुपासते ॥१४॥**

**(रा)** भजनप्रकारमाह - **सततमिति । मां सततं** 'कृष्ण कृष्ण' इत्यादिरूपेण **कीर्तयन्तः यतन्तः** मत्पूजादौ यत्नं कुर्वन्तः । दृढानि उपवासादिनियमव्रतानि येषां ते **दृढव्रताः । नित्ययुक्ताः** नित्यं मयि मनोयोगवन्तः । नित्यं कर्मज्ञानोपायवन्त इति वा । **भक्त्या नमस्यन्तश्च मामुपासते** ॥१४॥

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥**

**(वि) अन्ये ज्ञानाख्येन यज्ञेन यजन्तः सर्वत्रैक एव नारायणः स्थितः इत्येकत्वेन, पृथक्त्वेन सर्वतो वैलक्षण्येन, बहुधा शुक्लकृष्णादिबहुलत्वेन ।**

'दैवमेवापरे यज्ञम्' इत्युक्तप्रकारेण बहवो वा बहुधा भूत्वा विश्वतोमुखं सन्तं मामुपासते । उक्तं च -

"स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मा सहस्रकः ।
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः ॥"[1] ।

इति । तथाच -

"एकमूर्तिश्चतुर्मूर्तिरथवा पञ्चमूर्तिकः ।
द्वादशादिप्रभेदो वा पूज्यते सज्जनैर्हरिः ॥"[2]

इत्युक्तप्रकारेणैवोपास्यते ॥१५॥

**(रा)** अन्येऽपि च महात्मानो **ज्ञानाख्ययज्ञेन मां यजन्तः** पूजयन्तः **माम् उपासते** । श्रवणमननध्यानादि कुर्वन्तः परेभ्यः उपदिशन्तश्च नित्यं भगवन्माहात्म्यज्ञाने रता इत्यर्थः । **विश्वतोमुखम्** । मुखशब्दोऽत्र सर्वावयवोपेतरूपपरः । विश्वस्मिन् सर्वत्र स्थितं **मामेकत्वेन पृथक्त्वेन** सर्वजगद्वैलक्षण्येन **बहुधा च** शुक्लनीलपीतादिभेदेन बहुधोपासत इति वा । **बहुधा** बहव इत्यर्थः ।

---

१. ब्राह्मवचनम् ॥
वासुदेवः सङ्कर्षणो प्रद्युम्नो अनिरुद्धोऽहं मत्स्यः कूर्मो वराहो नारसिंहो वामनो रामो रामः कृष्णो बुद्धः कल्किरहं शतधाऽहं सहस्रधाहममितोऽहं अनन्तोऽहं नैवैते जायन्ते न म्रियन्ते नैषामनुज्ञा न वन्धो मुक्तिः सर्वे ह्येते पूर्णा अजरा अमृताः परमाः परानन्दाः"
- इति चतुर्वेदशिखायाम् ।(ब्र.सू.भा. ३/३/४८)
तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति । तस्य ह वा एतस्य पञ्चरूपाणि दशरूपाणि शतरूपाणि सहस्ररूपाणि अमितरूपाणि तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यनन्तानि सर्वाण्यसम्मितानि । - इति चतुर्वेदशिखायाम् ब्र.सू.भा.(३/३/४९)

२. गी.ता.; अत्र विशेषः -
पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत्पञ्चद्वयी शतसहस्रपरोऽमितश्च ।
एकः समोऽप्यखिलदोषसमुज्झितोऽपि सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूत् ।
- म.भा.ता.नि. (१/१०)

दैवमेवापरे यज्ञम्'[१] इत्यादिना चतुर्थोक्तदिशा वहव उपासत इति वाऽर्थः । यद्वा - 'एकमूर्तिश्चतुमूर्तिरथवा पञ्चमूर्तिकः' इति तात्पर्योक्तदिशा सर्वरूपात्मक-नारायणरूपैकमूर्तित्वेन, पृथक्त्वेन वासुदेवादिचतुर्मूर्तित्वेन, वहुधा नारायण-वासुदेवादिपञ्चमूर्तित्वेन, **विश्वतोमुखं** द्वादशचतुर्विंशत्यादिभेदेन स्थितम् । मामुपासत इत्यर्थः ॥१५॥

**अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्　　॥१६॥**

**(वि) प्रतिज्ञातं विज्ञानमाह** - अहं क्रतुरित्यादिना । **दीक्षाद्यवभृथान्ताः क्रतवोऽग्निष्टोमादयः । यज्ञो देवतोद्देशेन द्रव्यत्यागः ॥१६॥**

**(रा)** 'ज्ञानं विज्ञानसहितं वक्ष्यामि' इति प्रतिज्ञातज्ञानविपयं निरूप्य अधुना विज्ञानप्रदर्शनाय तद्विपयमाह - **अहं क्रतुरित्यादिचतुष्टयेन** । क्रतवः दीक्षाद्यव-भृथान्तकर्मकलापाः ज्योतिष्टोमादयः । **यज्ञस्तु** देवतोद्देशेन द्रव्यत्यागरूपं प्रधानं कर्म । कुरुपाण्डववत् सामान्यविशेषभावेन भेदो ज्ञेयः । **स्वधा** पितॄणां तिलोदकादिदानम् । 'अहं क्रतुः' इत्याद्यभेदोक्तिः 'रसोऽहमप्सु कौन्तेय' इत्यादाविव क्रत्वादेः क्रतुत्वादिनियन्तृत्वेन क्रत्वङ्गहविरादिभोक्तृत्वादिना ध्येया ॥१६॥

**[२]पिताऽहमस्य जगतो माता धाता पितामहः ।**
**वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च　　॥१७॥**

**(वि) पितामहः पूज्यः ॥१७॥**

**(रा)** किंच **अस्य जगतः पिता** जनकः **अहम्** । **माता धाता** पोपकोऽहमिति सर्वत्रानुवृत्तिः । **पितामहः** पूज्यः । **वेद्यं** ज्ञेयं वस्तु **पवित्रं** चाहमेव । यद्वा - वेद्यपवित्रवस्तुनोर्वेद्यत्वपवित्रप्रदत्वात् तथोच्यते । ॐकारादावोङ्कारत्व-

---

१. गी. (४-२४);
२. 'हरिरेव जगत्पितृमातृगतिः' इति द्वादशस्तोत्रे ।

ऋक्त्वादिनियन्तृत्वात् तद्धेयत्वादिना तदभेदो ध्येयः । यद्वा - 'अर्च्यत्वादृक् समत्वाच्च'[१] इत्यादिस्मृत्युक्तदिशा क्रत्वादिभिन्नस्य हरेर्योगवृत्त्या क्रत्वादिनामकत्वमिह ध्येयम् । तथा हि कृतिस्वरूपत्वात् क्रतुः । यदस्ति प्रामाणिकतया तज्ज्ञानातीति यज्ञनामा । स्वं स्वात्मानं धत्त इति स्वधा । 'उष दाहे' कर्मणि घञ् । उषाः उष्टाः तापत्रयदग्धाः तेषां निधिरित्यौषधनामा । मानाज्ज्ञानात् त्रातीति मन्त्रनामा । आ समन्तात् ज्यायस्त्वादाज्यनामा । अगस्य स्वतो गतिहीनस्य जगतो नेतेत्यग्निनामा । यज्ञादावाहूतत्वात् हुतनामा । ॐमित्याक्रियत इत्योङ्कारः । अर्च्यत्वात् पूज्यत्वाद् ऋङ्नामा । सर्वरूपेषु समत्वात् सामनामा । याज्यत्वाद्यजुर्नामा ।।१७।।

**गतिर्भर्ता[२] प्रभुः[३] [४]साक्षी निवासः [५]शरणं [६]सुहृत् ।**
**प्रभवः प्रलयः स्थानं निधानं [७]बीजमव्ययम् ।।१८।।**

**(वि) गम्यतेऽवगम्यते मुमुक्षुभिरिति गतिः । भरणाद्भर्ता । प्रभुः समर्थः। साक्षादीक्षत इति साक्षी । निवासः आश्रयः । संसारभीतरक्षणाच्छरणं सुहृत् प्रभवत्यस्मादिति प्रभवः । प्रलयकाले प्रलीयतेऽस्मिन्निति प्रलयः । तिष्ठत्यस्मिन्निति स्थानम् । संहारकाले प्रकृत्या जगदत्र निधीयत इति निधानम्, अव्ययं बीजं जगद्व्यक्तिकारणम् ।।१८।।**

---

१. गी.ता. उदाहृतप्रमाणवचनम् । ऐतरेयोपनिषद्भाष्ये (२/१/२) - "एभ्यः प्राणिभ्यो गतवानित्यृक् । गच्छति हि मरणकाले । 'ब्रह्मणा सम्परीत्यक्तो मृत इत्युच्यते बुधैः' इति हि भारते । अर्च गतिपूजनयोः ऋ गताविति धातोः ।"

२. सम्भवो भावनो भर्ता (वि.स.)

३. प्रभवः प्रभुरीश्वरः (वि.स.)

४. जीवो विनयिता साक्षी (वि.स.) ; अव्ययः पुरुषः साक्षी (वि.स.)
साक्षी चेता केवलो निर्गुणश्च (श्रुतिः)

५. सुरेशः शरणं शर्मः (वि.स.)

६. सुखदः सुहृत् (वि.स.)

७. 'बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्' (७/१०) इति ह्युक्तम्

(रा) मुमुक्षुभिरवगम्यत्वात् **गतिः** । **भर्ता** पोषकः । **प्रभुः** स्वामी । साक्षात् सर्वमीक्षत इति **साक्षी** । **निवासः** आश्रयः । **शरणं** भीतरक्षकः । मुक्ताश्रय इति यावत् । **सुहृद**निमित्तोपकारी । **प्रभवः** जगदुत्पत्तिकर्ता । प्रलयकर्तृत्वात् **प्रलयो**ऽहम् । **स्थानं** सर्वाधारोऽहम् । नितरां धारकत्वाद्वा, प्रलयकाले प्रकृत्यादिजगदत्र निधीयत इति वा **निधानम्** । तेन 'प्रकृतिं यान्ति भूतानि' इत्युक्त्यविरोधः । जगद्व्यञ्जकत्वाद् **बीजम्** । तथात्वेऽपि अविकारित्व-प्रदर्शनायोक्तम**व्ययमि**ति ॥१८॥

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।**
**[1]अमृतं चैव मृत्युश्च [2]सदसच्चाहमर्जुन[3] ॥१९॥**

**(वि) वृष्टिम् आकर्षामि प्रलयकालादन्यत्र । मरणान्मृत्युः । सत् कार्यम् । असत् कारणम् ।**

**"सदभिव्यक्तरूपत्वात् कार्यमित्युच्यते बुधैः ।**
**असदव्यक्तरूपत्वात् कारणं चापि शब्दितम् ॥"[4]**

**इत्यभिधानात् । इतरत् प्रसिद्धम् । 'अहं क्रतुः' इत्यादि 'रसोऽहम्' इत्यादिवद्व्याख्येयम् ॥१९॥**

(रा) किंच **अहम्** आदित्यस्थस्**तपामि** तापं करोमि । मेघचक्रगतः सन् **वर्षं** वृष्टिम् । **उत्सृजामि** । **निगृह्णामि** उपसंहरामि । **अहम्** इन्द्रियेषु स्थित्वा तेषां देहधारणेन मृतिं परिहरतीति हेतोर**मृतं अहम्** । प्रलयकालादन्यकाले संहतृत्वात्

---

१. 'अमृतः शाश्वतः स्थाणुः' - इति विष्णुसहस्रनामसु ।
'मुख्यतस्त्वमृतो हरिः । मुख्यामृतः स एवैकः ॥' इति काठकभाष्ये

२. असच्च सदसच्चैव यद्विश्वं सदसत्परम् ।
परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ -इति भारते (१/१/२३)

३. 'पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः समः ।
करोमि कर्म शुक्लं च तस्मान्मामर्जुनं विदुः ॥ -इति - भारते(४/४४/२०)

४. अभिधानवचनम् । - गी.भा.(९/१९)

मृत्युरहम् । सत् कार्यजातमहम् । असच्च कारणजातमहमेव । तन्नियन्तृत्वादे-रभेदोक्तिः । अहमित्यसकृदुक्तिरुपचारनिवृत्त्यर्था । यद्वा - साधुगुणपूर्णत्वात् सत् इत्युक्तोऽहम् । साधुगुणपूर्णपुरुषान्तरराहित्यात् असत् इत्युक्तोऽहमेवेत्यर्थः ॥१९॥

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥२०॥**

**(वि) तव यदशेषक्रत्वादिभोक्तृत्त्वं तन्नोपपद्यते । त्रैविद्यभागवतयोः फलभेदाभावप्रसङ्गादित्यत आह - त्रैविद्या इत्यादिना । तिस्र ऋगाद्या विद्या अधीयन्त इति त्रैविद्याः । सोमं पिबन्तीति सोमपाः । यज्ञैर्मामिष्ट्वा यज्ञादिकमन्ते मयि समर्प्य स्वर्गतिं प्रार्थयन्ते । ते पुण्यं सुरेन्द्रस्य लोकम्, आसाद्य दिवि दिव्यानुत्तमान् देवानां भोगान् अश्नन्ति ॥२०॥**

(रा) ननु सर्वयज्ञादिभोक्तृत्वादिना 'अहं क्रतुः' इत्याद्युक्तिरिति प्रथम-व्याख्यानं यत् तदयुक्तम् । तथात्वे त्रैविद्यकृतयज्ञभोक्तृत्वस्यापि प्राप्त्या तेषां भागवतानां च फलभेदो न स्यात् । भगवद्भोगनिमित्तकत्वात् कर्मफलस्य । तस्य च सर्वत्र साम्यात् । अतो भागवतानुष्ठितभगवद्भजनस्य त्रैविद्यकृतयज्ञ-फलादप्यतिशयफलमाह - **त्रैविद्या** इत्यादित्रयेण ॥ तिस्रो विद्या ऋग्यजुः-सामलक्षणा येषां ते त्रैविद्याः । त एव **त्रैविद्याः** । विष्णुं सर्वोत्तमं ज्ञात्वाऽपि त्रय्यां मुखतः प्रतीयमानस्वर्गाद्युद्देश्यकान्यदेवतायजनं बुद्ध्वा तथैवानुष्ठायान्ते विष्णौ समर्पणं कुर्वन्तः त्रैविद्याः । **मां यज्ञैरिष्ट्वा**ऽन्ते मयि समर्प्य **सोमपाः** हुतशेषसोमरसपानवन्तः । अत एव **पूतपापाः** शोधितकल्मषाः सन्तः। **स्वर्गतिं** स्वर्गमार्गम् । स्वराख्यप्राप्यं वा प्रति । **मां प्रार्थयन्ते** । **ते पुण्यं** पुण्यलभ्यम् । **सुरेन्द्रलोकं** स्वर्गम् । **आसाद्य** प्राप्य । **दिवि** स्वर्गे । **दिव्यान्** द्युलोकभवान् । अलौकिकानिति वा । **भोगान्** । **अश्नन्ति** भुञ्जते ॥२०॥

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥**

**(वि) ते स्वर्गकामाः तं प्रार्थितं विपुलं स्वर्गलोकं तत्सुखं भुक्त्वा भोगप्रेरके पुण्ये क्षीणे सति मर्त्यलोके विशन्ति । पुनरप्येवमेव वेदैर्विहितं धर्ममनुसृताः कामान् भोगान् कामयमानाः गमनागमनं लभन्ते ॥२१॥**

**(रा)** किंच ते स्वर्गकामेनान्यदेवतायाजिनः । **तं विशालं** विपुलम् । **स्वर्ग-सुखं भुक्त्वा । क्षीणे पुण्ये मर्त्यलोकं** भूलोकं भुक्तावशिष्टपुण्ययुक्ताः सन्तः **विशन्ति** । तदाह सूत्रे -'ॐ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॐ'[1] इति । **पुनरप्येवं** [2]**त्रयीधर्मं** वेदोक्तं धर्मम् । **अनुप्रपन्ना** अनुतिष्ठन्तः । **काम-कामाः** भोगेच्छवः । **गतागतम्** । द्वन्द्वैकवद्भावः । गतेन सहितं आगतमिति वा । स्वर्गं प्रति गमनं ततो मर्त्यलोकं प्रत्यागमनं च **लभन्ते** । न कदाऽप्यपुन-रावृत्तिं प्राप्नुवन्तीत्यर्थः ॥२१॥

**अनन्याश्चिन्तयन्तो मां ये[3] जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां [4]योगक्षेमं वहाम्यहम् ॥२२॥**

**(वि) ये तु भागवता जनाः अनन्याः अन्यफलकामनां प्राधान्येनान्य-देवतापूजनं च तद्रहिताः । मां चिन्तयन्तः निरन्तरं ध्यायन्तः । परित उपासते 'सम्यक् गुणगणज्ञानादुपासा पर्युपासना[5]' इत्युक्तेः । तेषां नित्यमभितः सर्वतः वाङ्मनःकायैर्भगवत्सेवायुक्तानाम् । योगक्षेमम-पुनरावृत्तिलक्षणं पुरुषार्थम् । प्रापयामि । उक्तं च -**

**"त्रैविद्यस्त्वपरो धर्मो नानादैवतपूजनम् ।**
**तत्रापि विष्णुर्ज्ञातव्यः सर्वेभ्योऽप्यधिको गुणैः ॥**
**समर्पयति यज्ञाद्यमन्ततस्त्वेव विष्णवे ।**
**त्रैविद्यधर्मा पुरुषः स्वर्गं भुक्त्वा निवर्तते ॥**

---

१. ब्र.सू.(३-१-८)

२. त्रयी श्रुतिर्नित्यवाक्च वेदोऽनुवचनं तथा - इति ह्यभिधानम् । भा.ता. २/७/२

३. ये वायौ - प्रकाशरूपत्वात् वायुः यः तस्मिन् इत्यर्थः । 'वायौ मुख्यधिया'(११/११/४४) इति भागवतोक्तेः ।

४. 'अप्राप्तप्राप्तिर्योगः, प्राप्तपरिरक्षणं क्षेमः' इति प्रमेयदीपिका (२/४५) ।

५. गी.ता. उदाहृतप्रमाणवचनम् ।

सम्यक् तत्त्वापरिज्ञानादन्यकर्मकृतेरपि ।
स्वर्गादिप्रार्थनाच्चैव रागादेश्चापरिक्षयात् ॥
सदा विष्णोरस्मरणात् त्रैविद्यो नाप्नुयात् परम् ।
अनन्यदेवतायागाद्भक्त्युद्रेकादकामनात् ॥
सदा योगाच्च वैशिष्ट्यं त्रैविद्याद्वैष्णवादपि ।
स्याद्धि भागवतस्यैव तेन ब्रह्मादयोऽखिलाः ॥
अश्वमेधादिभिर्यज्ञैरपि केशवयाजिनः ।
वैष्णवा इति बुद्ध्यैव मानयन्त्यन्यदेवताः ॥
सर्वदेववरत्वेन ये न जानन्ति केशवम् ।
तेषां पुण्यानि मोघानि यान्ति चान्धतमो ध्रुवम् ॥"[1]
इत्यादि ॥२२॥

**(रा)** त्रैविद्यानां फलमुक्त्वा भागवतानां फलमाह - **अनन्या इति** । न विद्यतेऽन्यश्चिन्त्यत्वेन येषां ते **अनन्याः**, अन्यदचिन्तयन्तो मां चिन्तयन्तः । ये जनाः । **पर्युपासते** भक्त्युद्रेकेणोपासते । **तेषां नित्याभियुक्तानां** नित्यमभि सर्वस्मिन् देशे शरीरेन्द्रियमनोभिर्वा युक्तानां भगवत्सेवोद्युक्तानाम् । नित्यं तत्स्मरणवतामिति वा । **योगक्षेमम्** । द्वन्द्वैकवद्भावः । योगस्य क्षेम इति वा । अप्राप्तप्राप्तिर्**योगो** मोक्षरूपः । तस्य **क्षेमः** अनन्तत्वम् । **वहामि** । अहमपुनरावृत्तिलक्षणं पुरुषार्थं ददामीत्यर्थः । भगवतः सर्वयज्ञभोक्तृत्वाविशेषेऽपि त्रैविद्यभागवतयोः फलभेदो भगवद्यजनरूपोपायभेदकृत इति द्योतनायानन्या इत्यादिविशेषणोक्तिः । तथा हि - 'यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति'[2] इत्यादौ पूर्वं त्रैविद्यानामन्यदेवतायाजित्वमुक्तम् । भागवतानां तद्विरोधितयाऽनन्या इत्युक्तम् ।

'न तु मामभिजानन्ति तत्त्वेन' इति त्रैविद्यानामतिशयभक्तिज्ञानाभाव उक्तः । तत्त्वज्ञानाभावे भक्त्यभावस्य सिद्धत्वात् । भागवतानां तत्प्रतियोगितया भक्त्युद्रेकसूचनाय **पर्युपासत** इति परिशब्दप्रयोगः । तथोपासनस्यैव पर्युपासन-

---

१. आग्नेयवचनम् । - गी.ता.

२. गी. (७-२१)

त्वात् । 'स्वर्गतिं प्रार्थयन्ते', 'कामकामाः' इति त्रैविद्यानां कामनमुक्तम् । तत्प्रतियोगितया भागवतानाम् । **चिन्तयन्तो मां** मामेव चिन्तयन्ति न काम-मिति कामनाभाव उक्तः । 'मामिष्ट्वा' इति 'मामेव यजन्ते' इति त्रैविद्या-नामन्ते समर्पणमुक्तम् । तत्प्रतियोगितया 'नित्याभियुक्तानाम्' इति सदा तत्स्मरणं तदुद्देशयुक्तत्वमुक्तम् । अतो द्वयोर्वैष्णवत्त्वेऽपि भगवद्भोग्यकर्म-वत्त्वेऽपि फलहेतूपायभेदात् फलभेद इति ॥२२॥

**येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयाऽन्विताः ।**
**तेऽपि [1]मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥२३॥**

**(वि) भगवद्भोगनिमित्तत्वात् फलस्य भगवतः सर्वत्र साम्यात् सर्वेषां फलसाम्येन भाव्यम् । तदभावे च 'अहं क्रतुः' इत्यादिनोक्तं सर्वत्र भगवतो भोक्तृत्वमपि न स्यादित्याशङ्कामपनुदन्नुक्तमेव प्रपञ्चयति** येऽपीत्यादिना ॥२३॥

**(रा)** भागवतेभ्योऽन्यदेवतायाजिनां फलभेदं सहेतुकं प्रपञ्चयति - **येऽपीति । अन्यदेवताभक्ता येऽपि श्रद्धयाऽन्विताः** सन्तोऽन्यदेवता **यजन्ते** । तदुद्देशेन हविस्त्यागं कुर्वन्ति । **तेऽपि मामेवाविधिपूर्वकं यजन्ति** । मदुद्देशेनैव कर्तव्येऽपि अन्योद्देशेन कृत्वा ते तत्कर्म अन्ते मय्यपर्यन्तीत्य-विधिपूर्वकमासीत् मद्यजनमिति भावः ॥२३॥

**अहं हि सर्वयज्ञानां[2] भोक्ता च प्रभुरेव च ।**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥**

**(वि) त्रैविद्यादिकृतानामपि यज्ञानां भगवद्भोक्तृत्वादविधिपूर्वकत्वे किं कारणमित्यत आह** - अहं हीति । **'मामिष्ट्वा प्रार्थयन्ते' इत्युक्तत्वात्**

---

१. सर्वदेवेष्वपि हरिः सर्वदेवनियामकः ।
नामवान् सर्वदेवानां सर्वपूजां तथाऽत्त्यसौ ॥ इति च । -भा.ता.(१०/३८/६)

२. 'यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः' - इति विष्णुसहस्रनामसु ।

**जानन्तोऽपि तत्त्वेन नाभितो जानन्ति । अतश्च्यवन्ति प्रच्यवन्ते । सर्वप्रकारेणाज्ञानिनां मिथ्याज्ञानिनां चानर्थप्राप्तिरेव, न स्वर्गाच्च्यवनमात्रम् । उक्तं च - 'सर्वदेववरत्वेन' इत्यादिना पूर्वोक्तत्वात् । अतः सर्वाधिक्यं विष्णोर्ज्ञात्वाऽपि ब्रह्मरुद्रादीनां तत्परिवारत्वमजानतामिदं फलम् ॥ २४ ॥**

**(रा)** तद्यज्ञस्यापि भगवद्भोगत्वात् कथमविधिपूर्वकतेत्यतोऽविधिपूर्वकत्वे कारणमाह - **अहं हीति । सर्वयज्ञानां भोक्ता प्रभुश्च** प्रवर्तक उद्देश्यश्च तादृशं **मां तु तत्त्वेन अभि** सम्यक् **न जानन्ति** । अभीत्यस्य सर्वोत्तमत्त्वेन हरिं जानन्तोऽपि यज्ञाद्युद्देश्यत्वादिना सम्यक् न जानन्तीत्यर्थः । 'तत्त्वेन' इत्यस्य तु ब्रह्माद्यन्यदेवतानां तु तत्परिवारत्वादिकं न सम्यक् जानन्तीत्यर्थः । **हि** यतोऽतस्ते **च्यवन्ति** । स्वर्गान्मर्त्यलोकं विशन्तीति ॥२४॥

**यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥**

**(वि) त्रैविद्यभागवतयोः 'ते पुण्यमासाद्य' इति, 'योगक्षेमं वहाम्यहम्' इति चोक्ते फलभेदं प्रपञ्चयति - यान्तीति ॥२५॥**

**(रा)** फलभेदं विविच्य प्रपञ्चयति - **यान्तीति** । इन्द्रादिदेवेषु व्रतं नियमो येषां ते तथा, इन्द्रादियाजकाः इन्द्रादीन् यान्ति । **पितृव्रताः** श्राद्धादिक्रियापराः । **पितॄन् यान्ति** । **भूतेज्या** भूतेषु सप्तमातृकादिषु इज्या पूजा येषां ते भूतेज्याः । शिष्टं व्यक्तम् ॥२५॥

**[१]पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥**

**(वि) अन्यदेवताभजनस्याल्पफलत्वेऽपि तदेव करोमि सुशक्यत्वात् । त्वं तु दुर्बलैः पूजयितुमशक्यो महत्वादित्याशङ्क्याह - पत्रमिति ।**

१. अयं श्लोकः भागवतेऽपि वर्तते कुचेलं प्रति कृष्णवचनत्वेन (१०/८१/४) ।

**अनिषिद्धं पत्रादि । यो भक्त्या मह्यं ददाति । तन्निर्मलचित्तस्य भक्त्या समर्पितमश्नामि । भक्त्यैवाहं तुष्ये न द्रव्यादिनेति भावः ॥२६॥**

**(रा)** अन्यदेवताभजनस्याल्पफलत्वेऽपि तदेव कार्यं सुशकत्वात् । त्वद्भजनं तु दुर्बलैरशक्यं कर्तुं तवातिमहिमत्वादित्यत आह - [१]**पत्रमिति** । अनिषिद्धपत्रादिकं **यो** मह्यं **भक्त्या** ददाति । **प्रयतात्मनः** । 'यम उपरमे' । प्रकर्षेणोपरतमनस्कस्य विषयविरक्तस्य । **भक्त्या** समर्पितमश्नामि । भक्त्यैवाहं तुष्टो भवामि न द्रव्यादिनेति भावः ॥२६॥

**[२]यत् करोषि यदश्नासि यज्जुहोषि ददासि यत् ।**
**यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥२७॥**

**(वि) सामान्यमुक्त्वा विशेषेण निगमयति** - यदिति । **ब्राह्मणेभ्यो हिरण्यादि यद्ददासि ॥२७॥**

**(रा)** यतोऽल्पमपि भक्त्याऽर्पितं मम प्रीतिकरम् । अतस्त्वमपि तथा कुर्वित्युपसंहरति - **यदिति । हे कौन्तेय ! यत् त्वं यत्** विहितं **करोषि** । **'विहितम्'** इति सर्वत्रान्वेतव्यम् । निषिद्धादिकरणस्य प्रत्यवायहेतुत्वात् । पात्राय च **यद्** द्रव्यादि **ददासि तत्** सर्वं **मयि** समर्पणं **कुरुष्व** ॥२७॥

**[३]शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥**

---

१. पत्रमिति अर्थः, पुष्पमिति धर्मः, फलमिति मोक्ष इति विशेषार्थ उक्तो भागवततात्पर्ये - 'धर्मपुष्पस्त्वर्थपत्रः कामपल्लवसंयुतः ।
महामोक्षफलो वृक्षो वेदोऽयं समुदीरितः ॥'(ब्रह्माण्डे) इत्यादिना । -भाग.ता.(१/१/३)
न त्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ - इति गी.भा.
याचितैः पत्रपुष्पाद्यैः करोति च ममार्चनम् । इत्यादि वाराहे द्वात्रिंशदपराधस्तोत्रे ।
अकर्मण्यप्रसूनाच्च - इति -योगदीपिका (४/३६)

२. कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतस्वभावात् ।
करोति यद्यत् सकलं परस्मै नारायणायेति समर्पयेत् तत् ॥ -भागवते (११/२/३६)

३. 'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते'(२/५०) इति ह्युक्तम् ।

**(वि) ततः किमित्यत आह - शुभेति ॥२८॥**

**(रा)** त्वदर्पणेन किमित्यत आह - **शुभाशुभेति** । शुभाशुभफलैः इति वहुव्रीहिः । एवं मयि सर्वसमर्पणे सति शुभाशुभफलकैः **कर्मबन्धनैः मोक्ष्यसे** । तदेव व्यनक्ति - **सन्यासेति** । फलत्यागकर्मानुष्ठानाभ्यां **युक्तात्मा विमुक्तः** सन् **मामुपैष्यसि** ॥२८॥

**[1]समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या मयि ते [2]तेषु चाप्यहम् ॥२९॥**

**(वि) तर्हि स्नेहादिमत्वादल्पभक्तस्यापि कस्मैचिद्बहुफलं ददासि विपरीतायापि कस्मैचिद्विपरीतमित्यत आह** - सम इति । **तर्हि न भक्त्या प्रयोजनमित्यत आह** - ये इति । **मय्यायत्तास्ते तेष्वहमायत्तः । यद्यपि मदायत्ता एते सर्वदा तथापि बुद्धिपूर्वकत्वाबुद्धिपूर्वकत्वेन भेदः । उद्धवादिवच्छिशुपालादिवच्च । मयि ते प्रीत्या वर्तन्ते, तेष्वहं प्रीत्या वर्त इति । उक्तं च -**

**'नास्य भक्तोऽपि यो द्वेष्यो न चाभक्तोऽपि यः प्रियः ।**
**किन्तु भक्त्यनुसारेण फलदोऽतः समो हरिः ॥'[3] इति ॥२९॥**

**(रा)** ननु 'भक्त्युपहृतमश्नामि' इत्युक्तदिशा यदि त्वं भक्तिप्रियः । तर्हि द्वेषिणामप्रियश्चेति स्यात् । तथा च - भक्तेषु द्वेषिषु यथाक्रमं स्नेहद्वेषवत्त्वा-

---

१. 'शाश्वतः समः'; 'समात्मा सम्मितः समः' - इति विष्णुसहस्रनामसु । 'समः प्रियः सुहृत्' भाग.(७/१/१); अनेन भगवतः पक्षपातादिदोषराहित्यमुच्यते । 'ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात् तथा हि दर्शयति ॐ(ब्र.सू. २/१/३५) कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये - इति तद्भाष्ये ।

२. वश्यतां स्वेच्छया सज्जनेष्वागतम् । -इति द्वादशस्तोत्रे ।
मयि निर्बद्धहृदयाः साधवः समदर्शिनः ।
वशीकुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ -भागवते (९/४/६६)
एधमानद्विडित्येव विष्णोर्नाम हि वैदिकम् ॥ -इति म.भा.ता.नि.(२२/३५)

३. पाद्मवचनम् - गी.ता. - 'समात्मा सम्मितः समः' इति विष्णुसहस्रनामसु ।

दल्पभक्तस्य कस्यचित् सुखरूपं बहुफलं ददासि, अल्पद्वेषिणो बहुदुःखरूपं ददासि इत्यापद्यते । राजादौ तथा दर्शनात् । एवं च वैषम्यनैर्घृण्ये प्राप्नुतस्तवेत्यत आह - **समोऽहमिति । अहं सर्वेषु भूतेषु समः** न वैषम्यादिमान् । यतो मे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्यो नास्ति । तदीयां भक्तिमपेक्ष्याधिकः प्रियश्च नास्ति । किन्तु तत्तदीयद्वेषभक्त्यनुसारेण तत्तत्सदृशफलद एवाहम् । अतः समोऽहम् । न हि तत्तत्कर्मानुसारेणानुशासिता यमो विषमो भवति । तथात्वे 'समवर्ती परेतराट्' इति प्रसिद्धिविरोधात् । तथेति भावेन भक्तिमतां फलमाह - **य इति । ये भक्त्याः मां भजन्ति** सेवन्ते । **ते । मयि** मदधीनाः मद्वशाः इति ज्ञानवन्तो भवन्ति । **तेषु चाप्यहं** तेषां वशोऽहमित्यर्थः ।

यद्वा - 'समः' इति पूर्वार्धे भक्तोऽभक्त इति पदद्वयमध्याहार्यम् । सर्वभूतेषु मे **भक्तः द्वेष्यो नास्ति । अभक्तो मे प्रियो नास्ति ।** अतः समोऽहम् । यदि भक्तेषु द्वेषमभक्तेषु प्रीतिं कुर्यां तर्ह्येव विषमः स्याम् । न चैवम् । किन्तु भक्त्यनुसारेण फलद इति भावेनाह - **य इति । ये मयि** प्रीत्या वर्तन्ते **तेषु, अहं** प्रीत्या वर्त इत्यर्थः ॥२९॥

**अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥३०॥**

**(वि) भगवद्भक्तिं प्रशंसति** - अपि चेदित्यादिना । **न भवत्येव प्रायस्तद्भक्तो दुराचारः । अपि तथापि । स्वयोग्यातिरिक्तपुण्येन** [१]**सुदुराचारः । अनन्यभाक् प्राधान्येनान्यदेवताः न भजन् । मां भजते**

---

१. 'स शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवैहि नास्य भक्तम्' इति हि श्रीविष्णुपुराणे*।
'सा श्रद्दधानस्य विवर्धमाना विरक्तिमन्यत्र करोति पुंसाम्' इति च ।
वेदाः स्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम् ।
पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम् ।
गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम् ।
तं चापि देवं शरणं प्रपन्न एकान्तभावेन नमाम्यजस्रम् ।
एतैर्विशेषैः परिशुद्धसत्त्वः कस्मान्न पश्येयमनन्तमेनम्'

**चेत्** । तर्हि **स साधुरेव मन्तव्यः** । कुतः, **हि** यस्मात् । **सम्यग्व्यवसितः** समीचीनव्यवसायवान् ॥३०॥

(रा) भक्तेः प्रशंसा क्रियते - अपि चेदित्यादिना । [१]सुदुराचारोऽपि भगवद्भक्तो यः कश्चिद्देवांशः, ऋष्यादिः स्वयोग्याधिकपुण्यापगमाय दैवादत्यन्त-दुराचारोऽपि । **अनन्यभाक्** स्वातन्त्र्येण देवतान्तरभजनहीनः सन् । **मां भजते चेत् सः साधुरेव मन्तव्यः** । कुतः, **हि** यस्मात् । स चन्द्रसूर्याद्यंशः **सम्यग्व्यवसितः** सञ्जातसमीचीनभगवत्तत्त्वनिश्चयवान्, अत इत्यर्थः ॥३०॥

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥**

(वि) अत एव **क्षिप्रं**[२] **भवति** । **धर्मचित्तः** । **शश्वत् शान्तिं** मोक्षं **गच्छति** । देवदेवांशविषयमेतत् ।

"नाविरतो दुश्चरितान्नाभक्तो नासमाहितः ।
सम्यग्भक्तो भवेत् कश्चिद्वासुदेवेऽमलाशयः ।
देवर्षयस्तदंशाश्च भवन्ति क्व च ज्ञानतः ॥"[३]

---

इति मोक्षधर्मे** आचारस्य साधनत्वोक्तेश्च । ज्ञानाभावे च सम्यग्भक्त्यभावात् ।
तथाहि गौतमखिलेषु-
'विना ज्ञानं कुतो भक्तिः कुतो भक्तिः विना च तत्' इति ।
'भक्तिः परे स्वेऽनुभवो विरक्तिरन्यत्र चैतत् त्रिकमेककालः' इति च भागवते - गी.भा.
* (३/८/३०) यमगीतायाम् ; ** भारते शान्ति. (३३५/३-५)

१. अत्यल्पस्त्वसुरावेशो देवानां च भविष्यति ।
प्राणमेकमसौ हित्वाऽऽखणाश्मसमः स्मृतः ।
तस्मिन्नप्यसुरावेशे गते प्रकृतिरेव तु ॥ इति च । भा.ता. (१०/२०/३१)

२. अत्यल्पस्त्वसुरावेशो देवानां च भविष्यति ।
प्राणमेकमसौ हित्वाऽऽखणाश्मसमः स्मृतः ।
तस्मिन्नप्यसुरावेशे गते प्रकृतिरेव तु -इति च ॥ -भा.ता. (१०/२५/३१)

३. शाण्डिल्यशाखावचनम् - गी.भा.

**इति वचनात् देवादिभ्योऽन्यः । भक्तिलिङ्गवान् दुराचारश्चेत् दाम्भिक एव । अल्पभक्तिमतः दुराचारस्य सत्सङ्गात् कथञ्चिन्महत्यपि भक्तिर्युज्यत एव हि । कौन्तेय । मे भक्तः दुराचारोऽपि न प्रणश्यतीति प्रतिजानीहि । डिण्डिमघोषपूर्वकं बाहुमुद्धृत्य प्रतिज्ञां कुरु ॥३१॥**

**(रा)** सम्यग्व्यवसायवत्त्वेऽपि सुदुराचारः कुतः साधुर्मन्तव्यः इत्यत आह - **क्षिप्रमिति । सम्यक्** व्यवसायवत्त्वात् । **क्षिप्रं** धर्मचित्तो **भवति । शश्वत् शान्तिं** शाश्वतमोक्षं च सम्यगधिगच्छति । हे **कौन्तेय ! मे भक्तः** दुराचारोऽपि **न प्रणश्यति** । नरकाद्यनर्थं न प्राप्नोति । एतच्च देवदेवांश-ऋष्यादिविषयं ज्ञेयम् ॥३१॥

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः [१]पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥**

**(वि) ये पापादियोनयोऽस्वाभाविकाः स्त्रियो वैश्यास्तथा शूद्राः ब्राह्मणा राजर्षयश्च ममातिभक्ताः स्युः । तेऽपि यान्ति परां गतिम् ॥३२॥**

**(रा)** कैमुत्येन च भक्तेर्महिमानमाह - **मां हीत्यादिना । हे पार्थ ! पापयोनयः** स्वयमुत्तमवर्णा अपि । पापहेतुका योनिर्जन्म येषां ते **पाप-योनयः** । ते क इत्यत उक्तम् - **स्त्रिय** इत्यादिना । स्वतः पुमांसोऽपि पापात् सुद्युम्नस्य इलात्वमिव स्त्रीत्वं प्राप्ताः, ये च स्वतो ब्राह्मणादिरपि पापाद्वैश्यादि-हीनर्वणतां प्राप्ताः शूद्रत्वं वा प्राप्ताः । **मामाश्रित्य स्युः** वर्तेरन् । मयि भक्तिमन्तो भवेयुः । **तेऽपि परां गतिं यान्ति** ॥३२॥

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥**

---

१. पापयोनयः - पापा योनिर्येषां ते पापयोनयः पापजन्मानः, के ते ? इत्याह - स्त्रियो वैश्यास्तथा शूद्राः । इति शाङ्करभाष्यम् ।

स्त्रियो वैश्याः शूद्राश्च पापयोनयोऽपि .... इति रामानुजभाष्यम् ।

**(वि) किं पुनः पुण्याः स्वाभाविका एते स्त्र्यादयो ब्राह्मणादयश्च । अत्र पापयोनयः स्त्रिय इतिवत् पुमांस इत्यनुक्तिः पापादिकारितपुंसामभावात् । तदुक्तम् -**

**'पापादिकारिताश्चैव पुंसां स्वाभाविका अपि ।**
**विप्रत्वाद्यास्तत्र पुण्याः स्वाभाव्या एव मुक्तिगाः ॥**
**यान्ति [1]स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा ।**
**न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः ॥**
**पुंसा सहैव पुंदेहे स्थितिः स्याद्वरदानतः ।**
**तज्जन्मनि वराः पापजाताभ्यो निजसत्स्त्रियः ॥**
**सर्वेषामपि जीवानामन्त्यदेहो यथा निजः ।**
**मुक्तौ च निजभावः स्यात् कर्मभोगान्ततोऽपि च ॥'[2] इति ।**

**अतो भक्तेः साधनोत्तमत्वादनित्यं नश्वरम् । असुखं सुखरहितम् । इमं भक्त्यादिसाधनलोकं देहं प्राप्याविलम्बेन मां भजस्व ॥३३॥**

**(रा) पुण्याः** पुण्यहेतुकाः । **ब्राह्मणाः** शूद्रादिहीनवर्णा अपि स्वयं यदि पुण्यवशेन ब्राह्मणत्वं प्राप्ताः । तथा राजत्वं ऋपित्वं वा प्राप्ताः परां गतिं यान्ति । **किं पुनः** स्वाभाविकाः । **एते** स्त्रीवैश्यादयः । परां गतिं यान्तीति वाच्यमित्यर्थः । अत्र नैमित्तिकस्त्रीवैश्यादिग्रहणमध्ये नैमित्तिकपुंसां स्त्रियः पुमांसो वैश्याः शूद्राः इत्यनुक्तिस्तु स्वभावतः स्त्रीणां केनापि हेतुना पुंस्त्वाभावेन नैमित्तिकपुंसामभावादेव ।

'यान्ति स्त्रीत्वं पुमांसोऽपि पापतः कामतोऽपि वा ।
न स्त्रियो यान्ति पुंस्त्वं तु स्वभावादेव याः स्त्रियः ॥'

इत्युक्तेरिति । अतो भक्तेः साधनोत्तमत्वादेव । **अनित्यम् असुखं** सुखहीनम् । **इमं** भक्त्यादिसाधनभूतम् । **लोकं** देहं भूलोकं वा । **प्राप्य** । अविलम्बेन **मां भजस्व** ॥३३॥

---

१. पुंसां स्त्रीत्वं भवेत् क्वापि तथाऽप्यन्ते पुमान् भवेत् ।
स्त्रीणां नैव हि पुंस्त्वं स्याद्बलवत्कारणैरपि ॥ इत्यादि । -म.भा.ता.नि. (११/११२,११३)

२. भविष्यत्पर्ववचनम् - गी.ता.

**मन्मना भव [१]मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥**

**॥इति श्रीमद्भगवद्गीतायां नवमोऽध्यायः॥**

**(वि) भजनप्रकारं दर्शयंस्तस्य फलमाह** - मन्मना इति । **मन्मनस्त्वादिप्रकारैः मत्परायणः सन् मय्यात्मानं मनो युङ्क्त्वा मामेवैष्यसि** ॥३४॥

॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीविद्याधिराजकृतायां नवमोऽध्यायः ॥९॥

**(रा)** भजनप्रकारं दर्शयन् तस्य फलमाह - **मन्मना** इति । एवं मन्मनस्त्वादिप्रकारेण **मत्परायणः** सन् । **आत्मानं** मनः । **मयि** युङ्क्त्वा **मामेवैष्यसि** प्राप्स्यसीति ॥३४॥

॥ इति श्रीमद्गीतार्थसङ्ग्रहे राघवेन्द्रयतिकृते नवमोऽध्यायः ॥

*****

१. भक्तमिति अन्नम् । मदर्थं भक्तम् अन्नं नैवेद्यादिकं यस्य स मद्भक्तः इति वा ।

# [1]दशमोऽध्यायः

**श्रीभगवानुवाच**

**भूय एव महाबाहो शृणु मे परमं वचः ।**
**यत् तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥**

**(वि) षष्ठोक्तं ज्ञानं नवमान्ते 'मन्मना भव' इति स्मारितम्, ध्यानार्थं 'रसोऽहम्' इत्यादिना 'क्रतुः' इत्यादिना चोक्त्वा भूयोऽत्र प्राधान्येन प्रपञ्च्योच्यते । तत्रादौ भगवतो बुद्ध्यादिमहर्ष्यादिविशेषकारणत्वं प्रतिज्ञा-पूर्वकं प्रतिपादयन्नाह - भूय एवेत्यादिना । प्रीयमाणाय श्रुत्वा सन्तोषं प्राप्नुवते । हितकाम्यया हितेच्छया । यद्वक्ष्यामि तद्वचः श्रुणु ॥१॥**

(रा) षष्ठेऽध्याये ध्यानयोग उक्तः । नवमान्ते च 'मन्मनाः'[2] इत्यादिना तद्ध्यानं स्मारितम् । तच्च ध्येयसापेक्षम् । अतो ध्यानार्थं भगवद्विभूतिरूपाणि अत्राध्याये अग्रे 'हन्त ते कथयिष्यामि' इत्यादिना प्राचुर्येण वक्ष्यन्नादौ बुद्ध्यादीनां महर्ष्यादीनां सामर्थ्यातिशयोपेततया निर्माणरूपं विशेपकारणत्वं च भगवतो वक्ति । यद्यपि 'भोक्तारं यज्ञतपसाम्'[3] इत्यादिना पञ्चमान्तादौ ध्येयमुक्तम् । तथाऽपि विशिष्टाधिकारिणां भगवद्विभूतय उपास्या इति तदुक्ति-रत्रेति । उक्तरूपविशेपकारणत्वमपि विशिष्टाधिकारिध्येयमिति तस्याप्यत्रोक्तिः । ननु, विभूतिरूपाण्यपि 'रसोऽहमप्सु कौन्तेय'[4] इत्यादिना 'अहं क्रतुः'[5] इत्यादिना चोक्तान्येव । सत्यम् । अत्र विस्तरेणोच्यत इत्यदोपः । अत एवास्य विभूत्यध्याय इति व्यपदेशः । तदुक्तेरेव बहुत्वेनैकवाक्यता चाध्यायस्य । विभूतिशब्दार्थमग्रे वक्ष्यामः ।

१. उपासनार्थं विभूतीर्विशेपकारणत्वं च केषाञ्चिदनेन अध्यायेनाह - गी.भा.१०/१
२. गी. (९-३४)
३. गी. (५-२९)
४. गी. (७-८)
५. गी. (९-१६)

तत्र पार्थस्य श्रोतृत्वसम्पत्तिप्रतिपादनाय तद्विशेषणोक्तिपूर्वं सम्बोध्य प्रतिजानीते - **भूय एवेति** । हे **महाबाहो ! भूय एव** पुनरेव । **मे** । **परमं वचः** माहात्म्यप्रतिपादकं वचनम् । **श्रुणु** श्रुत्वा तत्र निष्ठां कुरु । **प्रीयमाणाय** मद्वचः श्रुत्वा सन्तोषं प्राप्नुवते । अनेन श्रोतृत्वसम्पत्तिरुक्ता । **ते** तुभ्यं **हितकाम्यया** हितेच्छया **वक्ष्यामि** ॥१॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ।**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥**

**(वि) उपलक्षणार्थं सुरगणा इत्यादि । प्रभवं प्रभावम् । मद्वशां जगदुत्पत्तिं वा । यद्वा - प्रभवं ममोत्पत्तिं न विदुः । अभावादेव । यद्यस्ति तर्हि देवादयः सामान्यतोऽपि जानीयुः, सामान्यतः सर्वज्ञत्वात्, न च जानन्ति, अतो नास्तीति भावः । तत्र हेतुः - अहमिति । आदिरुत्पत्तिरित्यर्थः । सर्वस्यापि देवादेरुत्पत्तिरपि यदधीना कुतस्तस्योत्पत्तिरिति भावः । भगवत्प्रभावतदधीनजगदुद्भवौ च सामान्यतो देवादिभिर्ज्ञाताविति श्रुत्यादिसिद्धत्वात् तयोरभावो न शङ्कनीयः ॥२॥**

**(रा)** प्रतिज्ञातमहिमानमाह - **न म इति** । **सुरगणा महर्षयश्च** । **मे** । **प्रभवं** प्रभावम् । महिमानम् । **न विदुः** । **प्रभवमुत्पत्तिं** मदधीनामुत्पत्तिं जगत इति योज्यम् । **न विदुः** न जानन्ति । देवादिजगतो भगवदधीनामुत्पत्तिं सुरगणादयो न जानन्ति । किमुतान्य इत्यर्थः । यद्वा - **मे प्रभवं** ममोत्पत्तिं सुरगणादयो न विदुरित्यर्थः । भगवन्महिमवज्जगदुत्पत्तिवच्च भगवदुत्पत्तिं विद्यमानां न जानन्तीति न भ्रमितव्यम् । किन्तु महिमजगदुत्पत्त्योः सत्वमिव भगवदुत्पत्तेः सत्वमेव नास्तीति । तदभावादेव न विदुरिति ज्ञेयम् । प्रभावजगत्प्रभवयोरिव मे प्रभवः कुतो नेति चेत्, तत्रोच्यते **अहमादिरिति** । **देवानां मनुष्याणां च** । उपलक्षणमेतत् । देवादिकृत्स्नजगतोऽहमादिः कारणम् । **हि** । यतोऽतो मे प्रभवो नेति । सर्वस्य मत्सृष्टत्वेन । मज्जनकस्यान्यस्याभावात् । असतश्च पूर्ववृत्तित्वरूपजनकत्वायोगात् । आत्माश्रयापत्त्या मयैव मज्जननायोगादिति भावः । तदाह सूत्रे - 'ॐ असम्भवस्तु सतोऽनुपपत्तेः ॐ'[१] इति ॥२॥

---

१. ब्र.सू. (२-३-९)

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।**
**असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥**

**(वि) अनश्चेष्टयिता आदिश्च सर्वस्येत्यनादिः । अनस्य मुख्यप्राणस्याप्यादिर्वा । तम् । भ्रान्तिरहितः । मर्त्येषु मनुष्येषु ॥३॥**

**(रा)** स्वज्ञानान्मोक्षाख्यमहिमानं चाह - **यो मामिति** । **यो**ऽधिकारी **अजम्** उत्पत्तिहीनम् । **अनादिम्** अनश्चासावादिश्च तम् । सर्वचेष्टकं कारणभूतं च । अनितेरन्तर्णीतण्यर्थात् पचाद्यच् । यद्वा - अनस्य मुख्यप्राणस्य कारणं च । लोकानां महास्वामिनम् । **माम्** । **वेत्ति** जानाति । **स मर्त्येषु** । **असम्मूढः** सम्मोहहीनः भ्रान्तिहीनः सन् । **सर्वपापैः प्रमुच्यते** मुक्तो भवति ॥

**[1]बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमः शमः ।**
**सुखं [2]दुःखं भवो(ऽ)भावो भयं चाभयमेव च ॥४॥**

**(वि) सर्वकारणत्वं प्रथयति -** बुद्धिरित्यादिना । **बुद्धिरन्तःकरणं 'बुद्धिर्बोधनिधित्वातदन्तःकरणमुच्यते'[3] इत्यभिधानात् । कार्याकार्यविनिश्चयो वा । [4]ज्ञानं प्रतीतिः । 'ज्ञानं प्रतीतिर्बुद्धिस्तु कार्याकार्यविनिर्णयः'[5] इत्यभिधानात् । असम्मोहोऽकार्येच्छाराहित्यं मिथ्याज्ञानाभावो वा । क्षमा क्रोधाभावेन सहापकर्तुरनपकरणम् । 'अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते'[6] इत्यभिधानात् । सत्यं यथार्थं भाषणम्,**

---

१. चित्तिर्बुद्धिरिति ज्ञेया चित्तं तु स्मृतिकारणम्' इति शब्दनिर्णये -भाग.ता. (४/२९/५७)

२. दुर्दुःखमिति विज्ञेयं खं सुखं च तयोर्यतः ।
प्रदाता परमो विष्णुस्तस्माद्दुःखादिनामवान् ॥ इति हरिवंशेषु - भा.ता. (३/२९/३५)

३. शब्दनिर्णयवचनम् - गी.ता.

४. स्वरूपभूतज्ञानं तु सदा जीवस्य विष्णुना ।
नियतं प्राकृतं ज्ञानं भक्त्या तेनैव दीयते ॥ इति च । भा.ता. (११/२२/११)

५. अभिधानम् - गी.भा.

६. अभिधानवचनम् - गी.भा. (१६/३)

**यथार्थज्ञानपूर्वकरणं वा । 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः'[१] इति वचनात् । दम इन्द्रियनिग्रहः । शमः परमात्मनिष्ठा,'शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः'[२] इति वचनात् । सुखं अनुकूलवेदनीयम् । दुःखं प्रतिकूलवेदनीयम् । भव उत्पत्तिः । अभावोऽसत्यम् । भयं त्रासः । अभयं तद्विपरीतम् ॥४॥**

(रा) मुक्तिहेतुज्ञानविषयत्वमहिमानमुक्त्वा बुद्ध्यादिप्रदत्वमहिमानं चाह - **बुद्धिरिति** । यद्वा - 'अहमादिर्हि देवानाम्' इति देवाद्युपलक्षितसर्वकारणत्वं स्वस्योक्तम् । तत्र केषाञ्चिद्बुद्ध्यादीनां महर्ष्यादीनां च सामर्थ्यातिशयोपेततया निर्माणरूपविशेषकारणत्वोक्त्या प्रागुक्तं प्रपञ्चयति - **बुद्धिरित्यादित्रयेण** । **बुद्धि**रन्तःकरणं कार्याकार्यनिश्चयो वा । **ज्ञानं** तु प्रतीतिसामान्यम् । **असम्मोहः** अकार्येच्छाभावः मिथ्याज्ञानाभावो वा । **क्षमा** क्रोधाभावेन सहापकर्तुरनपकरणम् । **सत्यं** यथार्थज्ञानपूर्वकमनुष्ठानं वचनं वा । **दम** इन्द्रियनिग्रहः । **शमो** भगवन्निष्ठता । **सुखमनुकूलवेदनीयम्** । **दुःखं** प्रतिकूलवेदनीयम् । **भवः** उत्पत्तिः । **भावः** सत्ता । **भयं** त्रासः । **अभयं** त्रासविरोधिमनोव्यापारः ॥४॥

**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥**

**(वि) अहिंसा परपीडानिवृत्तिः । समता द्वन्द्वराहित्यम् । तुष्टिरलम्बुद्धिः। 'अलम्बुद्धिस्तथा तुष्टिः'[३] इत्यभिधानात् । तपो ब्रह्मचर्यादि । 'ब्रह्मचर्यादिकं तपः'[४] इत्यभिधानात् । दानं न्यायार्जितधनस्य परस्वत्वापादानम् । यशः कीर्तिः । अयशो दुष्कीर्तिः । एते नानाविधा बुद्ध्यादयो भावाः । प्राणिनां मत्सकाशादेव भवन्ति ॥५॥**

**(रा) अहिंसा** परप्राणिपीडाभावः । **समता** द्वन्द्वेषु निर्विकारत्वम् । **तुष्टि**र्विषयालम्बुद्धिः । **तपो** ब्रह्मचर्यादिः । **दानं** धर्मार्जितवित्तस्य परस्वत्वापा-

१. शब्दनिर्णयवचनम् - तैत्तरीयभाष्ये (१/२०)
२. भागवतवचनम् । (११/१९/३६) - गी.ता.
३. अभिधानवचनम् - गी.ता.; ४. अभिधानवचनम् - गी.भा. (१६/१)

दनम् । यशः कीर्तिः । अयशोऽपकीर्तिः । पृथग्विधाः नानाविधाः । एते भावाः धर्माः । भूतानां प्राणिनाम् । मत्त एव भवन्ति इति ॥५॥

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥**

**(वि) किंच पूर्वे सप्तमहर्षयः -**

**"मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।**
**वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः ॥"[1]**

**इति प्रसिद्धाः । चत्वारो मनवः । पूर्वे । स्वायम्भुवस्वारोचिषरैवतोत्तमाः । यद्वा-**

**"मनवो बोधवैशेष्याद्देवा ब्रह्मादयः स्मृताः ।**
**विप्रादिवर्णभेदेन चत्वारो बहवोऽपि ते ॥"[2]**

**इत्युक्ता देवाः । लोके । इमाः प्रजाः वर्तमानाः प्रजाः । येषां पुत्रपौत्रादिरूपेण वर्तन्ते । मत्तो भावो जन्म येषां ते मद्भावाः । ये च ब्रह्मणो मनसा जातास्तेऽपि मद्भावाः । ब्रह्मादयस्तु निमित्तमात्रम् । उक्तं च -**

**"निमित्तमात्रमीशस्य विश्वसर्गनिरोधयोः ।**
**हिरण्यगर्भः शर्वश्च कालाख्यारूपिणस्तव ॥"इति ॥६॥**

(रा) न केवलं भूतानां बुद्ध्यादिधर्मा मत्तो भवन्ति । किन्तु भूतान्यपि मत्त एव भवन्तीत्याह - **महर्षय इति ।**

'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः ॥'

इत्युक्ताः । **पूर्वे** पूर्वमन्वन्तरस्थाः । **सप्तमहर्षयः । मानसाः** ब्रह्मणो मनोऽपत्यतया **जाताः । पूर्वे** प्राथमिकाः । **चत्वारः** स्वायम्भुवस्वारोचिषरैवतोत्तमाख्याः ।

---

१. मोक्षधर्मवचनम् - शान्ति. (२०८-४)
२. विष्णुपुराणवचनम् - गी.ता.

**मनवः** । यद्वा - 'मनु अवबोधने' इत्यतः उप्रत्यये बोधवैशेष्याद्ब्रह्माद्या देवाः विप्रक्षत्रियवैश्यशूद्रभेदेन चतुर्धा स्थितत्वाच्चत्वारः । उक्तं हि बृहद्भाष्ये प्रथमाध्याये चतुर्थेऽव्याकृतब्राह्मणे -

"विष्णोर्ब्राह्मणजातिः सन् जज्ञे ब्रह्मा चतुर्मुखः ।
इतोऽग्रे जगतस्तस्मात् क्षत्रजातिरजायत ॥
वायुः सदाशिवोऽनन्तो गरुडः शक्र एव च ।
कामश्च वरुणश्चैव सोमः सूर्यो यमस्तथा ।
एवमाद्याः क्षत्रियास्तु देवता ब्रह्मनिर्मिताः ॥"[1]

इति । तथा-

"विवस्वदिन्द्रवरुणविष्णुभ्योऽन्येऽदितेः सुताः ।
रुद्रादन्ये तथा रुद्रा वायोरन्ये च वायवः ।
अग्नेरन्ये च वसवो वैश्या इत्येव कीर्तिताः ॥"[2]

तथा-

'अश्विनौ पृथिवी चैव कालो मृत्यव एव च ।
शूद्रदेवाः समुद्दिष्टा देववर्णा इति स्मृताः ॥'[3]

इति च ॥ विवस्वदिन्द्रवरुणानां क्षत्रियत्वाद्विष्णोरवर्णत्वात् तेभ्योऽन्येऽष्टावादित्या ग्राह्या इति '...विष्णुभ्यः' इत्युक्तम् । अग्नेर्ब्राह्मणत्वात् 'अग्नेरन्यः' इत्युक्तम् । सप्तैव वसवो वैश्याः । सदाशिवस्य क्षत्रियत्वात् 'रुद्रादन्ये' इत्युक्तम् । दशैव रुद्रा वैश्या इत्यर्थः । मद्भावा मत्तो भावो जन्म येषां ते **मद्भावाः** । मत्त एवोत्पत्तिमन्त इत्यर्थः । **लोके इमाः प्रजाः** । येषां प्रागुक्तमनूनां पुत्रपौत्रादिरूपेण वर्तन्ते । ते मद्भावा इत्यन्वयः । न च - 'ततो मनून् ससर्जान्ते मनसा लोकभावनान्[4]' इत्युक्त्या ब्रह्मसृष्टानां स्वायम्भुवादीनां कथं मद्भावा इत्युक्तिरिति शङ्क्यम् । ब्रह्मान्तर्यामिणो मत्तो जनिमन्त इत्यर्थकत्वात् मद्भावा इत्यस्य । ब्रह्मा तु द्वारमात्रम् । न चैवमपि प्रियव्रताद्यपत्यतादशाया-

---

१. वामनवचनम् - बृहद्भाष्य (३/५); २. नारदीयवचनम् - बृ.भा. (३/५)
३. नारदीयवचनम् - बृ.भा. (३/५); ४. भाग ३/२१/४९

मेवोत्पन्नानां तेषां मनुसञ्ज्ञकत्वेन मानसत्ववेलायां तदभावेन मनव इति उक्तिरयुक्तेति वाच्यम् । मानसदेहात्यागेनैव प्रियव्रतादावुत्पन्नानां द्वयोर्देहयोरैक्येन मनुत्वोपपत्तेः इत्येतद्भाष्यटीकायामेवोक्तेः ॥६॥

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥७॥**

**(वि) उक्तमाहात्म्यज्ञानस्य फलमाह** एतामिति । **विशिष्टभवनं विविधभवनं वा विभूतिः । युज्यते शक्यमनेनेति योगः सामर्थ्यम् । अविकम्पेन निश्चलेन ॥**

**(रा)** उक्तमाहात्म्यज्ञानस्य फलमाह - **एतामिति । एतां** 'न मे विदुः सुरगणाः' इत्यादिनोक्ताम् । **विभूतिं** विशिष्टभवनम् । सुरगणाद्यवेद्यत्वरूपां महत्तां वक्ष्यमाणनानाविधभवनं वा । **योगं च** बुद्ध्यादिसर्वस्रष्टृत्वोक्त्या लब्धम् । 'प्रभव' पदस्य प्रभावमिति व्याख्यानेन प्रभवपदेनोक्तं वा मम सामर्थ्यं च । 'युज्यतेऽनेन योगोऽसावुपायः शक्तिरेव च'[१] इत्युक्तेः । **तत्त्वतो यो वेत्ति । सोऽविकम्पेन** निश्चलेन । **योगेन** ध्यानरूपोपायेन । **युज्यते** युक्तो भवति । अत्रार्थे **संशयो** नेत्यर्थः ॥७॥

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा [२]भजन्ते मां बुधा भावसमन्विताः ॥८॥**

**(वि) उक्ते फले विश्वासजननार्थं सन्ति च तथा भजन्तः केचिदि-त्याह** - अहमित्यादिना । **प्रभवत्यस्मादिति प्रभव उत्पत्तिहेतुः । [३]भावेन भक्त्या । समन्विताः ॥८॥**

---

१. गी.ता. उदाहृतप्रमाणवचनम्

२. आदरो भजनं भक्तिर्बहुमानं च सेवनम् ।
पर्यायवाचकाः सर्वे स्मृतिस्तज्जन्म कर्म च -इति शब्दनिर्णये ॥ -भा.ता. (११/१३/३७)

३. 'भावो भक्तिः समुद्दिष्टः' - बृहदारण्यभाष्ये ।

(रा) उक्तफले विश्वासजननार्थं पूर्वोक्तमहिमज्ञानपूर्वं 'मां भजन्तः सन्ति' इति, 'अहम्' इत्यादि द्वाभ्यामुक्त्वा पुनः, 'तेषाम्' इत्यादिद्वाभ्यां फलं च व्यनक्ति । प्रभवत्यस्मादिति **प्रभवः** सर्वस्याहमुत्पादक इत्यर्थः । **मत्तः सर्वं प्रवर्तते** । इष्टानिष्टप्राप्तिपरिहाराद्यनुकूलव्यापारवद्भवति । लयादिरपि मदायत्त इत्युपलक्ष्यते इति मत्वा । **बुधाः** ज्ञानिनः । **भावसमन्विताः** भावेन भक्त्या समुपेताः । सन्तः **मां भजन्ते** । पत्रपुष्पादिभिरर्चयन्ति ध्यायन्ति चेत्यर्थः । अत्र पूर्वार्धेनैव मामित्यस्य लाभात्, पुनः **'माम्'** इत्युक्तिर्जीवश्वरैक्याभिप्रायेण स्वात्मानमुद्दिश्याहमेव सर्वस्य प्रभव इति मत्वा भजन्त इति प्रतीतिनिरासाय ॥८॥

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति[1] च ॥९॥**

---

१. केचिद्भक्ता विनृत्यन्ति गायन्ति च यथेप्सितम् ।
केचित् तूष्णीं जपन्त्येव केचिच्चोभयकारिणः ॥ इति च । -भा.ता. ७/७/३६
केचिदुन्मादवद्भक्ता बाह्यलिङ्गप्रदर्शकाः ।
केचिदान्तरभक्ताः स्युः केचिच्चैवोभयात्मकाः ।
मुखप्रसादाद्दार्ढ्याच्च भक्तिर्ज्ञेया न चान्यतः ॥ इति वाराहे । -भा.ता.११/२/४०
सन्तस्तु त्रिविधाः प्रोक्ता उत्तमा मध्यमाधमाः ।
उत्तमा देवतास्तत्र ऋष्याद्या मध्यमा मताः ।
अधमा मानुषोत्कृष्टास्ते चापि त्रिविधा मताः ।
तत्राधमेषु येषां तु सङ्गो विघ्नाय वै भवेत् ।
तेषामुत्तमसङ्गस्य तेषां सङ्गं परित्यजेत् ।
आदौ तु तेषामपि च सङ्ग उत्तमसङ्गतेः ।
साधनत्वान्न तु त्याज्यो यदि त्यक्तुं न शक्यते ।
तदा तेऽपि तथा नेया यथा विघ्नो न वै भवेत् ।
तदुच्चसङ्गतेः क्वापि तदा दोषो न जायते ।
प्रयोजनाय तेषां तु सङ्गः सर्वात्मनेष्यते ।
सर्वथा चैव देवेषु सङ्गो मुनिगणेषु च ।
भाव्यो हि तं विना नैव पुरुषार्थः क्वचिद्भवेत् ।

**(वि) कथं भजन्ते मच्चित्ताः मद्गतप्राणाः मद्विषयचेष्टाः श्रोतृभ्यः कथयन्तः ॥**

**(रा)** पुनर्भजनप्रकारमेवाह - **मच्चित्ता इति** । मन्निष्ठमनस्काः । **मद्गतप्राणाः** मद्विपयचेष्टावन्तः । **बोधयन्तः** शिष्यान् प्रति बोधयन्तः । **माम्** उपदेशेनेति योज्यम् । **परस्परं मां कथयन्तः** कीर्तयन्तश्च । **'नित्यम्'** इति सर्वत्रान्वेति । **तुष्यन्ति** तृप्ता भवन्ति । विपयेष्वलम्बुद्धिमन्तो भवन्ति । तत्र हेतुः- **रमन्ति च।** सुखमनुभवन्ति च इति ॥९॥

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।**
**ददामि [1]बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥**

**(वि) सततयुक्तानां मयि निबद्धचित्तानाम् । तमेव बुद्धिरूपमुपायं ददामि । येन बुद्धियोगेन ॥१०॥**

**(रा) सततयुक्तानां** नित्यं मयि निबद्धचित्तानाम् । **प्रीतिपूर्वकं मां भजताम्। तेषाम्** । **तमेव बुद्धियोगं** ज्ञानरूपं मुक्त्युपायम् । **ददामि** । **येन** बुद्धियोगेन **मामुपयान्ति** । **तमित्यन्वयः** ॥१०॥

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो [2]ज्ञानदीपेन भास्वता ॥११॥**

---

विशेषतः स्वोत्तमेषु विना सङ्गं न मुच्यते ।
स्वनीचेषु तु देवेषु विना सङ्गं न पूर्यते ।
तस्मात्सत्सूत्तमेष्वेषु सङ्गं कार्यो विशेषतः ।
अनाद्यनन्तकालेषु न च हाप्यः कथञ्चन ।
सतां तदुत्तमेशेशे किमु विष्णौ परात्परे -इति गारुडे ॥ - भा.ता. ४/२९/४६

१. मन्त्रलिङ्गैर्व्यवच्छिन्नं वेदशब्दोक्तमात्रकम् ।
वेदो वदन्नपि हरिं न सम्यग्वक्ति कुत्रचित् ।
नारोहयत्यनुभवमप्रसिद्धस्वरूपतः ।
अथाप्यनुभवारोहः प्रसन्ने केशवे भवेत् ।
किञ्चिदेव सुसम्यक् च स्वयं त्वनुभवत्यमुम् -इति वाराहे ॥ -भा.ता. (४/२९/४६)

२. 'प्रज्वालितो ज्ञानमयप्रदीपः' -इति भारते ।

**(वि) अनुकम्पार्थमनुग्रहार्थम् । अज्ञानजं तमः संसारम् । आत्मभावे चित्ते वृत्तौ । विषयतया स्थितः । भास्वता प्रकाशमानेन । ज्ञानाख्येन दीपेन । नाशयामि ॥११॥**

**(रा)** अनाद्यज्ञानकृतबन्धसत्वात् कथं तत्प्राप्तिरित्यत आह - **तेषामेवेति । तेषामनुकम्पार्थम्**[1] अनुग्रहार्थम् एव । न तु किञ्चित्फलमुद्दिश्य । **अहमज्ञानजम् । तेषाम् । तमः** सुखदुःखादिक्लेशरूपबन्धम् । **भास्वता** विरोधिनाशनदक्षतया प्रकाशमानेन । **ज्ञानाख्यदीपेन । आत्मभावस्थः** तदीयचित्तवृत्तिस्थः सन् **नाशयामी**ति ॥११॥

**अर्जुन उवाच**

**परं ब्रह्म परं धाम[2] पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥**

**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥१३॥**

**(वि) एवं सामान्यतो भगवतो विभूतियोगं श्रुत्वा विस्तरेण ज्ञातुकामोऽर्जुन उवाच** परमित्यादिना । **परम् उत्तमम् । ब्रह्म परिपूर्णम् । परं धाम तेज आश्रयो वा । परमम् । पवित्रम् । यद्वस्तु श्रुत्यादिसिद्धम्, तत् । भवान् । नारदादयो ज्ञानिनः । त्वामेव । पूर्णषाड्गुण्यादिविशेषेण विशिष्टं विशिष्टभवनात् विविधभवनाच्च । विभुमाहुः ।** अहं सर्वस्य **इत्यादिना स्वयमेव ब्रवीषि ॥१३॥**

**(रा)** एवं सङ्क्षेपेणोक्तं विभूतिं योगं च श्रुत्वा विस्तरेण ज्ञातुकामः तत्स्तुतिपूर्वकं तद्वक्तुं प्रार्थयते - **परम्** इत्यादिभिः सप्तभिः । हे **केशवे**त्यग्रेतनमाकृष्यते । **भवान्। परम्** उत्तमम् । **ब्रह्म** परिपूर्णं वस्तु । **परं धाम** उत्तमाश्रयः । **परमम् । पवित्रम् । त्वां ऋषयो** वसिष्ठाद्याः । **देवर्षिर्नारदो**ऽसितादयश्च ।

---

१. हृदयस्य द्रवीभावस्त्वनुकम्पेति कथ्यते .... इति शब्दनिर्णये - भा.ता. (४/७/४८)

२. धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम चोच्यते - इत्यभिधानात् - भा.ता.(४/२०/२१)

**पुरुषं** पूर्णषड्गुणम् । **शाश्वतं** निर्विकारम् । **दिव्यं** लोकविलक्षणम् । **आदि-देवम्** । **अजं** जन्महीनम् । **विभुं** विशिष्टतया विविधतया च भवनहेतुना विभुशब्दवाच्यम् । **आहुः** । 'अहं सर्वस्य' इत्यादिना । **स्वयं च** । **मे** मह्यम् । **ब्रवीषि** वदसि ॥१२-१३॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१४॥**

**(वि) अतो यन्मां प्रति । वदसि । सर्वमेतन्माहात्म्यम् । ऋतं सत्यम्। मन्ये । न प्रशंसामात्रम् । हे भगवन् । ज्ञानशक्तिबलैश्वर्यतेजोयशोनिधे। ते व्यक्तिम् । देवादयो न विदुः ॥१४॥**

**(रा)** हे **केशव** ! **यन्मां** प्रति **वदसि सर्वमेतन्माहात्म्यं ऋतं** सत्यमेव **मन्ये** । केशवशब्दार्थ उक्तः प्रथमाध्याये । हे **भगवन्** षड्गुणयुक्त । **ते व्यक्तिं** सामर्थ्यातिशयम् । **देवा दानवाश्च** । **न विदुः** । **ही**ति 'न यस्येन्द्रो वरुणो न मित्रः' इत्यादौ प्रसिद्धमित्यर्थः ॥१४॥

**[1]स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।**
**[2]भूतभावन भूतेश देवदेव जगत्पते ॥१५॥**

**(वि) त्वं स्वयमेव । स्वात्मानमात्मना स्वसामर्थ्येन । वेत्थ । भूतानां भावन उत्पादक । भूतानामीश नियामक ॥१५॥**

**(रा)** तर्हि को जानातीत्यत आह - **स्वयमेवेति** । हे **पुरुषोत्तम** ! **त्वं स्वयमेव** अन्यदनपेक्ष्य[3] । **आत्मना** स्वसामर्थ्येन । **आत्मानम्** । **वेत्थ** जानासि । **भूतभावन** भूतानामुत्पादक । **भूतेश** भूतनियामक ॥१५॥

---

१. अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ।
एकस्तद्वेद भगवान् प्रभुर्नारायणः स्वराट् ॥ इति मोक्षधर्मेषु । -भा.ता.(४/२२/४२)
यथा हरिः स्वमात्मानं वेद तद्वद्रमाऽपि न ।
ब्रह्मा च कुत एवान्ये विदन्त्येव तथापि तु ॥ इति माहात्म्ये । -भा.ता.(१०/३८/४)

२. भूतकृद्भूतभृद्भावो भूतात्मा **भूतभावनः** । - इति विष्णुसहस्रनामसु

३. स्वातन्त्र्येण स्वपरगतसर्वार्थविषयकम् ईश्वरज्ञानम् - प्रमाणपद्धतिः ।

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥**

**(वि) दिव्याः याः आत्मविभूतय आत्मनः विविधभूतयः नानाभूतानि रूपाणि । ताः । अशेषेण मद्योग्यतानुसारेण । वक्तुमर्हसि । द्वितीयार्थे व्यत्ययेन वा प्रथमा । याभिर्विभूतिभिः । इमान् । लोकान् । नियामकत्वेन व्याप्य तिष्ठसि ॥१६॥**

**(रा)** एवं स्तुत्वा प्रार्थयते - **वक्तुमिति** । **दिव्याः या विभूतयः याभिर्विभूतिभिः त्वम् इमान् लोकान् व्याप्य तिष्ठसि** । **ता** विभूतीः । **अशेषेण वक्तुम्** । **अर्हसी**त्यर्थः । विभूतयो नाम विविधतया नानारूपतया रामकृष्णादितया भूतानि रूपाणि । यद्वा -

येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु ।
विशिष्टत्वं स्वजातेः स्याद्विभूत्याख्यानि तानि तु ॥[1]

इत्युक्तदिशा स्वसन्निधिनिमित्तेन वस्तुषु स्वजात्युत्तमतापादकरूपाणि ॥१६॥

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया ॥१७॥**

**(वि) हे योगिन् अचिन्त्यशक्ते ! त्वाम्, सदा परिचिन्तयन् । त्वद्ध्यानार्थं प्रवृत्तः । ध्येयं त्वाम् । कथम्, विद्याम् । बुद्धिज्ञानादाविवान्येषु । केषु केषु वस्तुषु । मया । चिन्तनीयोऽसि ॥१७॥**

**(रा)** नित्यं मच्चिन्तनया विभूतिरूपाणि जानीहि, किं मद्वचनप्रार्थनयेत्यत आह - **कथमिति** । **त्वां परिचिन्तयन्**, अपि । **अहं** त्वद्वचनाभावे । हे **योगिन्** अनन्तशक्ते **विभूतीः** । **कथम्** । **विद्याम्** । जानीयाम् । अतो हे **भगवन्** ! **मया** । **केषु केषु भावेषु** पदार्थेषु तेषां स्वजात्युत्तमतापादकतया स्थितः सन् **चिन्त्योऽसि** ॥१७॥

---

१. विभूतितत्त्ववचनम् - गी.ता.

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।**
**भूयः कथय तृप्तिर्हि श्रृण्वतो नास्ति मेऽमृतम् ॥१८॥**

**(वि) अतः** सङ्क्षेपेणोक्तमपि विभूत्यादिकं **विस्तरेण पुनः कथय ।** त्वयोच्यमानं त्वन्महिमामृतं शृण्वतो मे अलम्बुद्धिर्नास्ति । हिशब्दो भगवताऽप्येतदवगतमिति द्योतनार्थः -

"द्विविधं वैभवं रूपं प्रत्यक्षं च तिरोहितम् ।
कपिलव्यासकृष्णाद्यं प्रत्यक्षं वैभवं स्मृतम् ।
भिन्नं ब्रह्मादिजीवेभ्यो जडेभ्यश्चापि तद्गतम् ।
स्वजात्याधिक्यदं तेषां तत् तिरोहितवैभवम् ॥"[1]

इत्यादि प्रमाणसिद्धम् ॥१८॥

**(रा)** तम् । **आत्मनः । विभूतिं** वस्तूनां विशिष्टताप्रदमात्मनो रूपम्, विविधतया भूतं रूपं च । एकवचनं समुदायाशयम् । **योगं** सामर्थ्यं **च । विस्तरेण । भूयः** पुनः पुनः । **कथय । ते ।** वचोऽमृतम् । **शृण्वतः । मे । तृप्तिर्नास्ति ।** जनार्दनशब्दार्थ उक्तः तृतीयाध्याये ॥१८॥

**श्रीभगवानुवाच**

**हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।**
**प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥**

**(वि) द्विविधा विभूतीरुपासनार्थं भगवानुवाच** - हन्त इत्यादिना । **प्राधान्येन प्रधानभूताः । काश्चिद्विभूतीः । कथयिष्यामि । मे । विभूति-विस्तरस्यान्तोऽवधिर्नास्ति ॥१९॥**

**(रा)** 'वक्तुमर्हस्यशेषेण' इत्यस्योत्तरं वदन् प्रतिज्ञां तावत् करोति **हन्तेति ।** हन्त हर्षे । **या दिव्याः ।** [2]**आत्मविभूतयः ।** वस्तूनां विशिष्टताप्रदरूपाणि

---

१. गी.ता. उदाहृतप्रमाणवचनम् (१०/११)।
२. स्वस्वजात्युत्तमत्वं तु भवेद्यद्रूपसन्निधेः ।
विभूतिरूपं तत्प्रोक्तमिन्दिरादिषु संस्थितम् ।

विविधरूपाणि च । **तानि** रूपाणि । **प्राधान्यतः** प्रधानतया स्थितानि । **ते** तुभ्यम् । **कथयिष्यामि** । **मे** । **विस्तरस्य** । विभूतिराशेः । **अन्तः** समाप्तिर्नास्ति । अतो नाशेषेण वचनं युक्तमिति भावः ॥१९॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥**

**(वि) गुडाका निद्रा, तस्या ईशः । जितनिद्रः । अहमात्मा आततगुणः। सर्वेषां भूतानामाशयेषु हृदयेषु नियामकतया स्थितः । अहमेव भूतानामादिश्च मध्यं चान्तश्च । सर्वोत्पत्तिस्थितिप्रलयहेतुरित्यर्थः ॥२०॥**

**(रा)** 'केषु केषु च भावेषु चिन्त्यः' इत्यस्य प्रश्नस्य सर्वभूतेष्वपि चिन्त्य इति भावेन सर्वभूतस्थत्वं तावत् सामान्यतो वक्ति - **अहमिति** । हे **गुडाकेश** जितनिद्र । **अहमात्मा** । व्याप्तोऽपि । **सर्वभूतानां** [१]हृदयगुहायां स्थितः । **अहमेव भूतानामादिर्मध्यमन्तश्च** । सृष्टिस्थितिलयकर्ता चेत्यर्थः ॥२०॥

---

तथा वहिःस्थितं रूपं विभूतीत्येव शब्दितम् ।
सर्वसाधारणं रूपमन्तर्यामीति चोच्यते ।
यथा कृष्णात्मना दुष्टहन्ता व्यासात्मना समः ।
असमोऽप्येकरूपोऽपि सामर्थ्यात्पुरुषोत्तमः ॥ इति च । -भा.ता.(११/१६/११)
ब्रह्मरुद्रेन्द्रजीवेभ्यः पृथगेव व्यवस्थितम् ।
विभूतिरूपं विष्णोस्तु तद्वश्रेष्ठ्यैककारणम् ।
तदेव ब्रह्मरुद्रादिनामभिर्वाच्यमञ्जसा ।
तदेव देवेष्विन्द्रोऽस्मि तथा रुद्रेषु शङ्करः ।
इत्यादिनोक्तं कृष्णेन नेन्द्राद्या जीवसञ्चयाः ॥ इति गीताकल्पे । -भा.ता. (११/१६/११)
स्वयूथानामथाधिक्ये स्वजातीनामथापि वा ।
यत्कारणं विभूत्याख्यं विष्णोस्तद्रूपमुच्यते ॥ इति प्राधान्ये ॥ -भा.ता.(११/१६/११)
यस्य यस्य स्वभावो यस्तत्तन्नामा हरिः परः ।
नियामकः स्वभावस्य तत्तच्छब्दादिनामवान् ।
वैशेष्याख्या विभूतिश्च विभूतिश्च स्वभावजा ।
द्विधा विभूतिर्विज्ञेया विष्णोस्तु परमात्मनः -इति च ॥ -भा.ता.(११/१६/३७)

१. यो वेद निहितं गुहायाम् - इति तैत्तिरीयोपनिषत् २/१
'गुहाशयायैव न देहमानिने' -भाग.(४/३/२२)

[1]आदित्यानामहं [2]विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥

(वि) अत्र शश्यादिषु विजातीयस्वाम्यदत्वेनोक्तो भगवान् नक्षत्रा-दीनां विजातीयत्वात्, 'सत्वं सत्ववताम्' इत्यादौ धर्मिषु सत्वादि-सारदत्वेनोक्तः, 'रुद्राणां शङ्करः' इत्यादौ शङ्करादीनां सजातीय-श्रैष्ठ्यदत्वेनोक्तः, 'देवानामस्मि वासवः' इत्यादौ वासवादीनां सजातीयै-कदेशश्रैष्ठ्यदत्वेनोक्तः । तदुक्तम् -

"शश्यादिषु विजातीयसाम्यदः सारदः क्वचित् ।
शर्वादिषु सजातीयश्रैष्ठ्यदत्वेन संस्थितः ॥
शक्रोशनार्जुनाद्येषु सजातीयैकदेशतः ।
देवेष्वभ्यधिको ब्रह्मा यतो विष्णोरनन्तरः ॥
कवित्वादिगुणैश्चैव यत्समो नास्ति कश्चन ।
तथा भीमश्च पार्थेषु ज्ञानं यज्ञेषु चोत्तमम् ।
सुदर्शनश्चायुधेषु वेदेषु ऋग्वेद एव च ॥"[3]

इत्यादि । क्वचित् साम्ये आधिक्यमभिमानिन्यपेक्षया ॥२१॥

(रा) द्विविधं हि भगवतो विभूतिरूपम्, प्रत्यक्षं तिरोहितं च । तत्र प्रत्यक्षं विष्णुकपिलव्यासवासुदेवरामादिरूपम् । तिरोहितं तु पदार्थेष्वन्यत उत्कर्ष-

---

१. 'इन्द्रो विष्णू रविर्धाता पूषा त्वष्टाऽर्यमा भगः ।
मित्रो वरुणपर्जन्यौ सविता द्वादशा मताः ।। इति द्वादशादित्याः (विष्णुरहस्ये २३/१७)

२. "विष्णुः सर्वव्यापित्वप्रवेशित्वादेः।
'विष्लृ व्याप्तौ' 'विश प्रवेशने' इति हि पठन्ति ।
'गतिश्च सर्वभूतानां प्रजानां चापि भारत।
व्याप्तौ मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम ।
अधिभूतनिविष्टश्च तदिच्छुश्चापि भारत।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः' इति मोक्षधर्मे ।।' (गी.भा.) इति विष्णुशब्दार्थः ।

३. विभूतितत्त्ववचनम् - गी.ता.

प्रदत्वेन सन्निहितम् । द्विविधविभूतिरूपाणि सङ्कलय्याह- **आदित्यानामिति ।** **द्वादशादित्यानां मध्ये अहं विष्णुरस्मि** । सर्वत्रव्याप्तत्वात् सर्वेषु प्रविष्टत्वाद्वा, विष्णुनामास्मि । 'विष्लृ व्याप्तौ' इत्यतः क्नुप्रत्ययः । 'विश प्रवेशने' इत्यतः क्नुप्रत्यये शकारस्य षत्वे वा विष्णुरिति सिद्धेः । 'केषु केषु' इति पृष्टस्योत्तरमाह - **ज्योतिषामिति । ज्योतिषां** प्रकाशरूपाणां मध्ये **अंशुमान्** विश्वव्यापिरश्मियुक्तो **रविरहमस्मि** । ज्योतीरूपेभ्यो रवेराधिक्यहेतुतया रवेण वेदशब्देन ईयते ज्ञायते इति व्युत्पत्त्या रविनामकः सन् रवौ सन्निहितोऽस्मीत्यर्थः । रवशब्द उपपदे 'इण् गतौ' इत्यतः क्विप् उपपदान्तलोपः । **मरुतामेकोनपञ्चाशन्मरुतां**[१] मध्ये तेभ्यो मरीचिनाम्नो मरुत आधिक्यहेतुतया मरशब्दोक्तोदकवान् मेघो मरी तं चालयतीति व्युत्पत्त्या [२]**मरीचिः** मरीचिनामा सन् मरीचौ मरुति **सन्निहितोऽस्मि** । **नक्षत्राणां** मध्ये तेभ्यो शशिन आधिक्यहेतुतया शशशब्दितातिसुखत्त्वहेतुना **शशिनामा** सन् शशिनि चन्द्रे स्थितोऽस्मि । एवमग्रे सर्वत्र तिरोहितेष्वर्थो ध्येयः । ग्रंथगौरवभयात् निरुक्तिमात्रं वक्ष्यामः ॥२१॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥**

---

१. 'प्राणोपानस्तथा व्यान उदानश्च समानकः ।
नागश्च कृकलः कूर्मो देवदत्तो धनञ्जयः ।
प्रवहो विवहः शंयुः संवहश्च परावहः ।
उद्वहश्चावहः शङ्कुः कालः श्वासोऽनलोऽनिलः ।
प्रतिभः कुमुदः कान्तः शुचिः श्वेतोऽजितो गुरुः ।
झंझाप्रवर्तकः कीलोऽदितिः सौम्यः कपिर्जडः ।
मण्डूकः सन्ततः सिद्धो रक्तः कृष्णः पिकः शुकः ।
यतिर्भीमो हनुः पिङ्गोऽहं प्राणः कम्पनस्तथा ।
सप्तसप्तकसङ्ख्याका मरुतोऽमी प्रकीर्तिताः ॥' इति मरुतः । -विष्णुरहस्ये (२३/२१-२५)

२. मरीचिः - मुख्यवायुजः प्रवहः -
'मरीचिनामान्तरवान् प्रवाहो मुख्यवायुजः ।
कोणाधिपः स एवोक्तो नासिक्यो भौतिकस्तथा ।' इति तारतम्यकौस्तुभोक्तेः ॥

**(वि) भूतानां चेतनवतां सम्बन्धिनी चेतना ज्ञानशक्तिः ॥२२॥**

**(रा)** साम्यहेतुना [१]सामवेदनहेतुना वेदे स्थितः **सामवेदनामा** । वसन्त्यत्रेति वासः सर्वदेशाः, तत्र सर्वत्र वर्तत इति भावः । वसतेरधिकरणे घञ्, तस्मिन्नुपपदे वृतुधातोर्डः । अवबोधरूपत्वान्मनः मनतेरसुन् । चेतो-नेतृत्वाच्चेतना । स्त्रीरूपेण चेतनायां स्थितत्वात् स्त्रीलिङ्गम् । यद्वा - भूतानां चेतनारूपसारधर्मद इत्यर्थः । [२]**चेतना** नाम चेतसो व्याप्तिः । सा च 'बहु-स्मरणशक्तिश्च चेतनेत्यभिधीयते' इत्युक्तदिशा ज्ञेया ॥२२॥

**[३]रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।**
**[४]वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥**

**(रा)** सुखकारणत्वात् शङ्करनामा । वित्तस्वामित्वात् **वित्तेश**नामा कुबेरस्थः । **पावकः** पावयति शोधयतीति व्युत्पत्त्या पावकनामा । 'पव शुद्धौ' इत्यतोऽन्तर्णीतण्यर्थात् ण्वुल् । शुद्धिकर्तेत्यर्थः । **मेरु**रित्यत्र मा ईरुरिति विभागः । ईरयति प्रेरयतीति ईरः प्रेरकः । मा शब्दो निषेधार्थः । ईरः प्रेरकोऽ-स्यान्यो मा नास्तीति मेरः मेर एव मेरुः । 'ईर प्रेरणे' इत्यतः ताच्छील्यार्थे उप्रत्ययः । **शिखरिणां** पर्वतानाम् ॥२३॥

---

१. वर्णेशानि पदान्याहुः पादाश्चापि तदीश्वराः ।
पादानामीश्वरार्धर्चा तदीशा ऋच एव च ।
ऋचामधीशा वर्गाश्च तेषां सूक्तमधीश्वरम् ।
सूक्ताधीशास्तथाऽध्यायास्तदधीशास्तथाऽष्टकाः ।
तदधीशास्तथा शाखा वेदाश्चापि तदीश्वराः ।
वेदानामीश्वरा वाच्या वाच्यानामीश्वरो हरिः ।
न हरेरीश्वरः कश्चित्कदाचित्क्वापि विद्यते ॥ इति च । - भा.ता.(११/१६/१२)

२. बहुस्मरणशक्तिस्तु चेतनेत्युच्यते बुधैः -इति शब्दनिर्णये ॥ -भा.ता.(४/२२/३०)

३. 'अजैकपादहिर्बुध्नी रुद्रो वामो वृषाकपिः ।
महेशो रैवतो भीमो घोरस्तत्पुरुषो भवः ।
एवमेकादश प्रोक्ता रुद्राः प्रलयकारिणः ॥' इति एकादशरुद्राः । - विष्णुरहस्ये २३/१८

४. 'ध्रुवः प्राणो द्युनामाऽर्को वह्निर्दोषो वसुर्धरः ।
वसवोऽष्टाविमे प्रोक्ताः सहायाः जातवेदसः ॥' इति अष्टवसवः । -विष्णुरहस्ये २६/१९

**पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।**
**सेनानीनामहं [१]स्कन्दः सरसामस्मि सागरः ॥२४॥**

**(रा)** **पुरोधसां** पुरोहितानां, बृहतां पतित्वाद्बृहस्पतिनामानम् । **सेनानीनां** सेनानेतॄणां स्कन्दनात् स्वस्माज्जगतो निष्कासनात् स्कन्दनामा । 'स्कन्दिर्गति-विशेषणयोः' इति धातोरच् । **सरसां** सरोवराणां **सागरः** । गिरतीति गरः । 'गॄ निगरणे' पचाद्यच् । सारस्य गरः सागरः । रशब्दलोपो निरुक्तत्वात् । सारभोक्तृत्वात् सागरनामा समुद्रस्थः ॥२४॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः[२] ॥२५॥**

**(वि) गिरां पदानाम्, एकमक्षरं प्रणवः । जपयज्ञः स्वाध्यायः । स्थावराणां गहनानां गभीराणाम् ॥२५॥**

**(रा)** विरोधिनां भर्जनाद्धननात् **भृगु**नामा भृगुस्थः । मुख्यत्वाद**एकम्** । चतुर्विधनाशहीनत्वात् **अक्षर**नामा प्रणवस्थः । जान् जातान् पातीति जपः । याज्यत्वाद्यज्ञः । जपश्चासौ यज्ञश्चेति व्युत्पत्त्या **जपयज्ञ**नामा जपरूपयज्ञस्थः । **स्थावराणां** गतिहीनानां **हिमालय** इति । ह्रीश्च मा च तयोरालय आश्रयः । ह्रीमालयः स एव हिमालयः । ह्रीश्रीशब्दितलक्ष्मीस्वरूपद्वयस्याश्रयत्वात्, हिमवत्पर्वतस्थः ॥२५॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥२६॥**

---

१. **स्कन्दः** स्कन्दधरो धुर्यो वरदो वायुवाहनः । इति विष्णुसहस्रनामसु ।

२. सुमध्वविजये हिमालये भगवद्विभूतिचिन्तनप्रकारः प्रदर्शितः -
पादोपान्तनमन्महामुनिगणं हेमप्रदीप्ताम्बरं
श्रीमद्रत्नकलापमग्र्यकटकैर्विभ्राजितं हाटकैः ॥
दृष्ट्वा तं धरणीधरं सुवनमालोल्लासिनं सुन्दरं
स्वानन्दाकृतिमस्मरन्मुररिपुं स्वानन्दतीर्थस्तदा ॥ (६/५७)

**(रा)** अश्ववत् तिष्ठतीत्यश्वत्थनामा अश्वत्थगतः । नराणामपेक्षितं नारम् । तद्ददातीति **नारदनामा** नारदस्थः । विचित्राधिदेवादिरथवत्त्वात् [1]**चित्ररथनामा** तन्नामकगन्धर्वस्थितः । सुखरूपत्वात् कः । पाल्यते जगदनेनेति पिः । 'पा रक्षणे' इत्यतः किः । 'आतो लोप इटि च'[2] इत्याकारलोपः । लीयते जगदनेनेति लः । 'ली श्लेषणे' इत्यतो डः । 'ला आदाने' इत्यतो वा कः । कश्चासौ पिश्चासौ लश्चेति [3]**कपिलः** । कं सुखं पिबत्यनुभवति लीलयेति वा कपिलः ॥२६॥

**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम्[4] ।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥**

**(रा)** अत्युत्कृष्टकीर्तिमत्त्वहेतुना **उच्चैःश्रवोनामानममृतोद्भवं** क्षीरसमुद्रजातोच्चैःश्रवःस्थं विद्धि । 'तदैरं मदीयं सरः' इति मुक्तिस्थसरसो लक्ष्म्यात्मकत्वोक्तेः ऐरं श्रीः तामवतीति **ऐरावतनामानम्** इन्द्रवाहनस्थं विद्धि । नरेश्वरत्वहेतुना **नराधिपनामानं** चक्रवर्त्यादिस्थं विद्धि ॥२७॥

**आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।**
**प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥२८॥**

---

१. चित्ररथविषये विशेष उक्तस्तात्पर्यनिर्णये (२१/१०९-११७)
२. पा.सू. ६/४/६४
३. "सुखरूपः पाल्यते लीयते च जगदनेनेति कपिलः-
'प्रीतिः सुखं कमानन्दः' इत्यभिधानात् ।
'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति च ।
'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति ज्ञायमानं च पश्येत् ।
सुखादनन्तात् पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरन्ति ॥ '
- इति च बाभ्रव्यशाखायाम् (गी.भा.) इति कपिलशब्दार्थः ।
४. अमृतोद्भवमिति ऐरावतम् इत्यनेनापि सम्बद्ध्यते । ऐरावतस्यापि अमृतमथनकाले क्षीरसमुद्रादुद्भूतत्वात् - उच्चैःश्रवा नाम तुरङ्गमोऽभूत् करी तथैरावतनामधेयः ।
- म.भा.ता.नि.(१०/१९)

**(वि) प्रजनः प्रजोत्पादकः कन्दर्पः, न केवलं भोगार्थम् । सर्पाणामेकशिरसाम् ॥२८॥**

(रा) सर्वदोषवर्जितत्वादरभिर्वर्जनाद्वा [१]**वज्रनामा** इन्द्रायुधस्थः । कामितार्थदोग्धृत्वात् **कामधुङ्नामा** कामधेनुस्थः । कं सुखम्, तस्य दराः प्रभेदाः तान् पिबत्यनुभवतीति **कन्दर्पनामा** । प्रकृष्टजननकारणमन्मथस्थः । सर्पाणामेकशिरसाम् । वासस्य कं वासकम् अतिशयार्थ उकारः वासुकः तद्दातृत्वेन तद्वान् **वासुकिः** । मत्वर्थक इकारप्रत्ययः । 'वासुकिर्वाससुखदः' इति निरुक्तेः ॥२८॥

**अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।**
**पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥२९॥**

**(वि) नागानां बहुशिरसां शेषः । यादसां जलजन्तूनाम् । संयमतां नियमनं कुर्वताम् ॥२९॥**

(रा) **नागानामनेकशिरसां** देशकालगुणानन्त्यहेतुना**ऽनन्तनामा** शेषगतः । **यादसां** जलचराणां उत्कृष्टानन्ददत्वात् **वरुणनामा** वरुणस्थः। 'णश्च निर्वृतिवाचकः'[२] इत्युक्तेः । वरशब्दस्य उकारोऽन्तादेशः । वृणोतीति वा वरुणः वृञ उणप्रत्ययः । 'ऋ गतौ' इति धातोर्यप्रत्यये, अर्यं ज्ञेयं तन्माति जानातीत्य**र्यमनामा** तन्नामकपितृस्थः । **संयमतां** नियमनं कुर्वतां **यमः** । नियमनहेतुना **यमनामा** यमाख्यसारधर्मप्रद इत्यर्थः ॥२९॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥**

**(वि) कलयतां बन्धनादिकुर्वताम् ॥३०॥**

---

१. वज्रायुधस्य नारायणकवचमन्त्रसिद्धदधीचिमुनेरङ्गसञ्जातत्वमुक्तं भागवते (६/९/५१-५५), (६/१०/१-१३)

२. ऐतरेयभाष्ये

(रा) प्रकृष्टः ह्लादः सुखं यस्येति **प्रह्लादनामा** तन्नामकदैत्यस्थः । **कलयतामाकलयतां बन्धनादिकुर्वतां** वा **कालः** । 'कल ज्ञाने' इति धातोः । सर्वमाकलयतीति कालनामा कालस्थः । स्वात्मानं मृगयन्त्यन्वेषयन्तीति मृगाः भक्तास्तदधिपतित्वात् **मृगेन्द्रनामा** मृगेन्द्रस्थः । विशेषेण नताः विनतास्तेषाम्, आश्रयतया तत्सम्वन्धी **वैनतेयः** । 'वैनतेयो नतास्पदः'[1] इति निर्वचनात् । सम्वन्धे ढक् ॥३०॥

**पवनः पवतामस्मि [2]रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥**

**(वि) पवतां शोधकानाम् । वेगवतां वा । झषाणां मत्स्यानां मकरो मत्स्यविशेषः । स्रोतसां प्रवाहजलानां गङ्गा ॥३१॥**

(रा) **पवतां** शोधकानाम्, वेगवतां वा । पान्तीति पाः 'पा रक्षणे' क्विप् । पाभिः पालकैः वननीयत्वात्, भजनीयत्वात्, **पवनः** पवनस्थः । लोकं रमयतीति **रामः** लोकोऽस्माद्रमत इति वा रामः । रमेर्घञ् । **झषाणां** मीनानाम् । 'माङ् माने' इत्यतो माशब्देन ज्ञानं तस्याल्पताज्ञापनाय ह्रस्वतया निर्देशः । 'ऊनार्थे चोनमिष्यते' इत्युक्तेः । लोकस्य मं अल्पज्ञानं करोतीति **मकरनामा** मकराख्यजन्तुगतः । असारतया संसारं जहतस्त्यजतोऽवति रक्षतीति **जाह्नवीनामा** गङ्गास्थः ॥३१॥

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥**

---

१. विभूतितत्त्ववचनम् - गी.ता.

२. आनन्दरूपत्वात् पूर्णत्वात् लोकरमणाच्च रामः ।
'आनन्दरूपो निष्परीमाण एष लोकश्चैतस्माद् रमते तेन रामः' इति शाण्डिल्यशाखायाम्। रश्च अमश्चेति व्युत्पत्तिः । - गी.भा.

**(वि) सृज्यन्त इति सर्गाः भूतानि । तेषां ये सृष्ट्यादिहेतवः तेऽहम् । अध्यात्मविद्या ब्रह्मविद्या । प्रवदतां जल्पवितण्डादिकुर्वतां सम्बन्धी । 'तत्त्वनिर्णयार्थं कथा'[१] वादः ॥३२॥**

**(रा)** सृज्यन्त इति सर्गाः भूतानि । तेषां सृष्टिस्थितिलयहेतुरहमेवेत्यर्थः । आत्मनो जीवानधिकृत्य पतित्वेन वर्तते ज्ञप्तिस्वरूपश्चेत्यध्यात्मविद्यानामा ब्रह्मत्रियास्थः । प्रवदतां जल्पवितण्डादिकथां कुर्वताम् । वाच्यत्वहेतुना वादनामा वादकथास्थः ॥३२॥

**[२]अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥३३॥**

---

१. वादो जल्पो वितण्डेति त्रिविधा विदुषां कथा । तत्त्वनिर्णयमुद्दिश्य केवलं गुरुशिष्ययोः।
कथाऽन्येषामपि सतां वादो वा समितेः शुभा । - इति कथालक्षणे

२. अ इति ब्रह्म । (ऐतरेय)
'अ आ अं अः पुराणर्षिः व्यासः शाखासहस्रकृत्'
इति पद्मपुराणान्तर्गतवासुदेवसहस्रनामस्तोत्रे ।

अकारः प्रथमं नाम विष्णोः सर्वगुणान् ब्रुवन् ।
सर्वदोषविरुद्धत्वाद्गुणानामन्यतामपि ।
विष्णोर्वदति जीवेभ्यो जडेभ्यश्चैव सर्वदा ।
अभावं चैव दोषाणां सर्वेषां केशवे वदेत् ।
सम्यग्वक्तृत्वतस्तस्मादकारो मुख्यनाम हि ।
तदर्थानेकदेशेन शब्दाः सर्वेऽपि चोचिरे ।
व्याख्याव्याख्येयरूपत्वं विकारत्वमिहोदितम् ।
विकारत्वं च नान्यत् स्यान्नित्या वेदा यतोऽखिलाः ।
वाचकेषु तथा विष्णोः सहस्रबृहतीमयम् ।
उक्थमुत्तममुद्दिष्टं व्याख्याऽकारस्य सा परा ।
अन्येऽपि शब्दाः सर्वेऽपि ह्यकारार्थाभिधायिनः ॥
-इत्यकारमाहात्म्यमुक्तम् ऐतरेयभाष्ये (२/७)

आनन्दत्वादनामाऽसावुत्कृष्टत्वादुनामकः ।
एतन्नामद्वयं विष्णोर्ज्ञात्वा पापैः प्रमुच्यते ॥ इति स्कान्दे । - भा.ता.(१०/९४/३३)

**(वि) सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः समासः । स ह्युभय-पदार्थप्रधानत्वेनोत्तमः । अक्षयः कालः । अबाधकः कालादिः । धाता स्रष्टा । विश्वतोमुखश्चतुर्मुखः ॥३३॥**

(रा) अ इत्याक्रियमाणत्वात्, **अकारनामा** अकारस्थः । **सामासिकस्य** समाससमूहस्य । वहिरन्तर्द्विरूपत्वेन द्वन्द्वनामा द्वन्द्वसमासस्थः । क्षय-हीनत्वात्, **अक्षयनामा** संहर्तृत्वात्, **कालनामा** सन् । अक्षयकालस्थः । उत्तरा-वधिशून्यः त्रिकालगतः । 'कलच्छेदने' इति धातोः । **धाता** धारणपोषणकर्ता । डुधाञ् धारणपोषणयोः । सर्वदिङ्मुखत्वहेतुना **विश्वतोमुखनामा** चतुर्मुखस्थ इत्येके । सर्वत्र स्थितमुखोपलक्षितसर्वावयववान् इत्यन्ये ॥३३॥

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥**

**(वि) सर्वहरो मृत्युश्चाहम् । भविष्यतामुत्पत्स्यमानानां सम्बन्धी । उद्भव उत्पत्तिः । यद्वा - भविष्यतां भाविशुभानाम् । प्राणिना-मुद्भवोऽभ्युदयः, नारीणां मध्ये कीर्त्यादयः स्त्रियः ॥३४॥**

(रा) **सर्वहरो** मारकत्वहेतुना **मृत्युस्थः** । **भविष्यताम्** उत्पत्स्यमानानां उद्भावयतीति व्युत्पत्त्योद्भवनामा उद्भवस्थः । कीर्त्यत्वाश्रयत्ववक्तृत्वहेतुभिः **कीर्तिश्रीवाङ्नामा** सन् कीर्तौ श्रियां वाचि च स्थितः । स्मरणीयत्वात्, **स्मृतिनामा** स्मृतिस्थः । **मेधाधृतिक्षमारूपत्वात्** तत्तन्नामा मेधाधृतिक्षमास्थः ॥३४॥

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहं ऋतूनां कुसुमाकरः ॥३५॥**

**(वि) साम्नां रथन्तरादीनाम् । छन्दसां त्रिष्टुप्जगत्यादीनाम् । गायत्री छन्दः । कुसुमाकरो वसन्तः ॥३५॥**

**(रा)** बृहत्सारत्वात् बृहत्सः अमेयत्वादमः बृहत्सश्चासावमश्चेति **बृहत्साम-नामा** । रथन्तरवैरूपवैराजशाक्वरादिसाम्नां मध्ये तदाधिक्यहेतुतया बृहत्साम-स्थः । स्वगायकान् त्रातीति[1] व्युत्पत्त्या **गायत्रीनामा** । त्रिष्टुप्जगत्यादि-छन्दोभ्य आधिक्यहेतुतया [2]गायत्रीच्छन्दस्थः । मार्गाणां शीर्षस्थानत्वात् **मार्गशीर्षनामा** मासेभ्य आधिक्यहेतुतया मार्गशीर्षमासस्थः । कुत्सितां सुष्टुभूतां च मां ज्ञानं करोतीति **कुसुमाकरनामा** अन्यऋतुभ्य आधिक्यहेतुना वसन्त-ऋतुस्थः ॥३५॥

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।**
**जयोऽस्मि व्यवसायोऽस्मि [3]सत्त्वं सत्त्ववतामहम् ॥३६॥**

---

१. तथा हि दर्शनं 'गायति त्रायति च' इत्यादि - इति सूत्रभाष्ये (१-१-२५)

यदिदं परितः पूर्णं मत्स्यकूर्मादिरूपकम् ।
तदिदं भगवान् विष्णुस्सर्वान्तःस्थित एव च ।
तन्निःसृतत्वाद्वेदानां गायकस्त्राति चाखिलम् ।
अतो गायत्रिनामासौ वासुदेवः परः पुमान् । - सत्तत्त्ववचनम् - छां भा. (३/१३)

२. "गायत्री वृहती चैव ताः सर्वा गरुडस्तथा ।
व्रह्माण्यनुष्टुविन्द्राणी त्रिष्टुप् स्वाहेति चोच्यते ।
गायत्री जगती चैव वारुणी रोहिणी तथा ।
अनुष्टुब्वृहती चैव तारा पङ्क्तिः शची तथा ।
उष्णिक् सौरी जगत्यश्च सर्वदेवस्त्रियो मताः ।
विराण्मित्रावरुणयोर्भार्ये इति च कीर्तिते ।
अतिच्छन्दांसि सर्वाणि सर्वदेव्यः प्रकीर्तिताः ।
विराडिति च नामासां तास्ता ऊनाधिकेष्वपि ।
निचृद्भुरिग्विराट्सञ्ज्ञाः प्रस्तारेत्यादि नाम च ।
बह्वीनामेकमानेन त्वेकं नाम च युज्यते ।
सर्वाभिमानिता चैव तिसृणां च यथाक्रमम् ॥"

इत्यादिना छन्दांसि तदभिमानिदेवताचोक्ता ऋग्भाष्ये - (१/४१-४५)

३. वलज्ञानसमाहारः सत्त्वमित्यभिधीयते ।

**(वि) छलकार्यादीनां सम्बन्धीनि द्यूतादीनि ॥३६॥**

**(रा)** छलयतां कापट्यमाचरताम् । क्रीडापरत्वहेतुना **द्यूतनामा** द्यूतस्थः । प्रकाशत्वात् तेजोनामा तेजःस्थः । **जयिनां** जयरूपसारप्रदत्वहेतुना **जयोऽस्मि** । **व्यवसायो** निश्चयः । व्यवसायिनां व्यवसायरूपसारधर्मदाताऽस्मीत्यर्थो ज्ञेयः । **सत्ववतां** सत्वरूपसारधर्मप्रदोऽस्मीत्यर्थः ॥३६॥

**वृष्णीनां [१]वासुदेवोऽस्मि पाण्डवानां [२]धनञ्जयः ।**
**मुनीनामप्यहं [३]व्यासः कवीनामुशना [४]कविः ॥३७॥**

**(वि) कवीनां वाग्मिनाम् । उशना शुक्रः ॥३७॥**

**(रा)** वासयति सर्वमाच्छादयति निवासयतीति वा वासुः । 'वस आच्छादने' 'वस निवासे' इत्यतो वा, ण्यन्तादुण् । सर्वत्र वसतीति वा वासुः, वसतेरुण् । स चासौ देवश्च क्रीडादिगुणविशिष्टश्चेति **वासुदेवः** । धनं जयतीति **धनञ्जयनामा** धनञ्जयस्थः । सर्वस्माद्विशिष्टत्वाद्विः आसमन्तात्सः गतः, 'सृ गतौ' इत्यतो डः । विश्वासावासश्च सर्वगतश्चेति **व्यासः** ।

---

१. आच्छादयति सर्वं वासयति वसति च सर्वत्रेति वासुः । देवशब्दार्थ उक्तः पुरस्तात्।
'छादयामि जगद् विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम्'। इति मोक्षधर्मे ।"-(गी.भा.) इति वासुदेवशब्दार्थः

२. ऋते रुद्रादिकानिन्द्रः सर्वदेवाधिकः स्मृतः ।
ऋते भीमं फाल्गुनश्च पाण्डवेभ्यो वरस्तथा ।
तथा शुक्रः कवीशस्तु वृहस्पत्यादिकानृते ।
यमः संयमातामीशः शङ्करादीन् विनैव तु ॥ इति गीताकल्पे । -भा.ता. (११/१६/१३)

३. "विशिष्टः सर्वस्मादासमन्तात् स एवेति व्यासः। तथा चाग्नेयशाखायाम्-
'स व्यासो वीति तमं स वै वि सोऽधस्तात् स उत्तरतः स पश्चात् स पूर्वस्मात् स दक्षिणतः स उत्तरत इति' इति।
'यच्च किञ्चित् जगत् सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥' इति च ।"
- (गी.भा.) इति व्यासशब्दार्थः ।

४. 'सङ्ख्यावान् पण्डितः कविः' इत्यमरः ।

यद्वा- विशिष्टा आसा स्थितिर्यस्यासौ व्यासः, 'आस उपवेशने' इति धातोः। 'उश इच्छायाम्' इति धातोः सर्गादीच्छावत्त्वादुशनानामा सन् उशना कविः उशनसि कवौ स्थित इत्यर्थः ॥३७॥

**दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।**
**मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥**

**(वि) दमयतां दण्डं कुर्वताम् । जिगीषतां जेतुमिच्छताम् । गुह्यानां सम्बन्धिषु गोपनेषु ॥३८॥**

(रा) दमयतां दण्डं कुर्वतां दण्डनहेतुना दण्डनामा दण्डनरूपधर्मदाताऽस्मीत्यर्थः । जिगीषतां नीतिरस्मि नीतिरूपसारप्रदोऽस्मि । गुह्यानां गोपनीयानां मुनीनामीड्यत्वसम्बन्धेन मुनीनामिदं मौनम् । शब्दस्वभावान्नपुंसकता । मुनिसम्बन्धितया मौननामा मौनस्थः । ज्ञानवतां ज्ञानाख्यसारदोऽहमित्यर्थः । स्वयं च ज्ञानरूपत्वेन ज्ञाननामा ।

अत्र शश्यादिषु विजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तम् । नक्षत्रादीनां विजातीयत्वात् । 'सत्वं सत्ववताम्' इत्यादौ धर्मिषु सत्वादिसारधर्मदं विभूतिरूपमुक्तं ज्ञेयम् । तथैव दर्शितमस्माभिस्तत्र तत्रैव । 'रुद्राणां शङ्करः' इत्यादौ सजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तम् । वासवोशनधनञ्जययज्ञवज्रसामवेदानां सजातीयैकदेशाधिक्यदं विभूतिरूपमुक्तम् । तेषां सजातीयसर्वश्रैष्ठ्याभावात् । देवेषु कवित्वादिगुणेषु च ब्रह्मणः, पार्थेषु भीमस्य, यज्ञेषु ज्ञानयज्ञस्य, आयुधेषु चक्रस्य, वेदेषु ऋग्वेदस्य आधिक्यात् ॥३८॥

**यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।**
**न तदस्ति विना यत् स्यान्मया भूतं चराचरम् ॥३९॥**

**(वि) यच्च सर्वभूतानां बीजं कारणम् । तदप्यहमेव । यदि ज्योतिरादिषु रव्यादीनां त्वत्सन्निधानकृतवैशिष्ट्यम्, तर्हि तदन्येषां ज्योतिरादीनां त्वत्सन्निधिर्न स्यादतस्तत्तत्सत्तादिकं स्वत एव स्यादित्यत आह - न तदिति । मया विना यद्भूतं स्यात् तन्नास्ति ॥३९॥**

(रा) **बीजं** कारणम् । तदप्यहमेव श्रैष्ठ्यदत्वेन । भगवतः सर्वगतत्वं कुतो मानादित्यत आह - **न तदिति । मया विना यद्भूतं स्यात् तच्चराचरं नास्ति,** यतोऽतोऽहं सर्वत्र स्थित इत्यर्थः । यद्वा - रविप्रभृतिषु श्रैष्ठ्यदत्वेन तव सन्निधावुक्ते ज्योतिरादिषु नेति प्राप्तम्, अतः सर्वत्राहमस्मीति व्यतिरेकमुखेनाह - **न तदिति** ।।३९।।

**[1]नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ।।४०।।**

**(वि) सङ्क्षेपकरणे कारणं दर्शयन्नुपसंहरति** - नान्त इति । **विभूतिरूपाणामानन्त्यादुक्तो विभूतिविस्तर एष उद्देशतः इदमिदं विभूतिरूपस्येति[2] यत्तद्विशेषनामनिर्देशतः सोऽपि सङ्ग्रह एवेति भावः** ।।४०।।

---

१. अनन्तमिति वेत्तीशस्त्वनन्तं त्वन्तवत्तथा । अनन्तस्य हि सङ्ख्याने न तु सर्वज्ञता भवेत् ।
अनन्तमपि वेत्तीशः प्रत्येकं च विशेषतः । सर्वज्ञत्वान्न सङ्ख्यानमसङ्ख्यस्य कुतो हि सा ।
-इति च ।।- भा.ता.११/१६/३९

२. श्रीमद्भागवतनिरूपितविभूतयः -
**उद्धव उवाच -**
तं ब्रह्म परमं साक्षादनाद्यन्तमपावृतम् ।
सर्वेषामपि भावानां प्राणः स्थित्यप्ययोद्भवः ।।
उच्चावचेषु भूतेषु दुर्ज्ञेयमकृतात्मभिः ।
उपासते त्वां भगवन् याथातथ्येन ब्राह्मणाः ।।
येषु येषु च भावेषु यथा त्वां परमर्षयः ।
उपासीनाः प्रपद्यन्ते संसिद्धिं तद्वदस्व मे ।।
गूढश्चरसि भूतेषु भूतात्मा भूतभावनः ।
न त्वां पश्यन्ति भूतानि पश्यन्तं मोहितानि ते ।।
याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ।
ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम् ।।
**श्री भगवानुवाच -**
एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर ।
युयुत्सुना विशसने सपत्नैरर्जुनेन वै ।।
ज्ञात्वा ज्ञातिवधं गर्ह्यमस्वर्ग्यं राज्यहेतुकम् ।

ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ॥
स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः ।
अभ्यभाषत मामेवं यथा त्वं रणमूर्धनि ॥
अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ।
अहं सर्वाणि भूतानि तेषां स्थित्युद्भवाप्ययः ॥
अहं गतिर्गतिमतां कालः कलयतामहम् ।
गुणानामप्यहं सौम्यं गुणिन्यौत्पत्तिको गुणः ॥
गुणिनामप्यहं सूत्रं महतां च महानहम् ।
सूक्ष्माणामप्यहं जीवो दुर्जयानामहं मनः ॥
हिरण्यगर्भो देवानां मन्त्राणां प्रणवस्त्रिवृत् ।
अक्षराणामकारोऽस्मि पदानि च्छन्दसामहम् ॥
इन्द्रोऽहं सर्वदेवानां वसूनामस्मि हव्यवाट् ।
आदित्यानामहं विष्णू रुद्राणां नीललोहितः ॥
ब्रह्मर्षीणां भृगुरहं राजर्षीणामहं मनुः ।
देवर्षीणां नारदोऽहं हविर्धान्यस्मि धेनुषु ॥
सिद्धेश्वराणां कपिलः सुपर्णोऽहं पतत्त्रिणाम् ।
प्रजापतीनां दक्षोऽहं पितॄणामहमर्यमा ॥
मां विद्ध्युद्धव दैत्यानां प्रह्लादमसुरर्षभम् ।
सोमं नक्षत्रौषधीनां धनेशं यक्षरक्षसाम् ॥
ऐरावतं गजेन्द्राणां यादसां वरुणं प्रभुम् ।
तपतां द्युमतां सूर्यं मनुष्याणां च भूपतिम् ॥
उच्चैःश्रवास्तुरङ्गाणां धातूनामस्मि काञ्चनम् ।
यमः संयमतां चाहं सर्पाणामस्मि वासुकिः ॥
नागेन्द्राणामनन्तोऽहं मृगेन्द्रः शृङ्गिदंष्ट्रिणाम् ।
आश्रमाणामहं तुर्यो वर्णानां प्रथमोऽनघ ॥
तीर्थानां स्रोतसां गङ्गा समुद्रः सरसामहम् ।
आयुधानां धनुरहं त्रिपुरघ्नो धनुष्मताम् ॥
गिरीणामस्म्यहं मेरुर्गहनानां हिमालयः ।
वनस्पतीनामश्वत्थ ओषधीनामहं यवः ॥
पुरोधसां वसिष्ठोऽहं ब्रह्मिष्ठानां बृहस्पतिः ।
स्कन्दोऽहं सर्वसेनान्यामग्रण्यां भगवानजः ॥

यज्ञानां ब्रह्मयज्ञोऽहं व्रतानामविहिंसनम् ।
वाय्वग्न्यर्काम्बुवागात्मा शुचीनामप्यहं शुचिः ॥
योगानामात्मसंरोधो मन्त्रोऽस्मि विजिगीषताम् ।
आन्वीक्षिकी कौशलानां विकल्पः ख्यातिवादिनाम् ॥
स्त्रीणां तु शतरूपाऽहं पुंसां स्वायम्भुवो मनुः ।
नारायणो मुनीनां च कुमारो ब्रह्मचारिणाम् ॥
धर्माणामस्मि सन्त्यागः क्षेमाणामवहिर्मतिः ।
गुह्यानां सततं मौनं मिथुनानां पुमानहम् ॥
संवत्सरोऽस्म्यनिमिषामृतूनां मधुमाधवौ ।
मासानां मार्गशीर्षोऽहं नक्षत्राणां तथाऽभिजित् ॥
अहं युगानां च कृतं धीराणां देवलोऽसितः ।
द्वैपायनोऽस्मि व्यासानां कवीनां काव्य आत्मवान् ॥
वासुदेवो भगवतां त्वं तु भागवतेष्वहम् ।
किम्पुरुषाणां च हनुमान् विद्याध्राणां सुदर्शनः ॥
रत्नानां पद्मरागोऽस्मि पद्मकोशस्तु पेशसाम् ।
कुशोऽस्मि दर्भजातीनां गव्यमाज्यं हविष्ष्वहम् ॥
व्यवसायिनामहं लक्ष्मीः कितवानां छलग्रहः ।
तितिक्षाऽस्मि तितिक्षूणां सत्त्वं सत्त्ववतामहम् ॥
ओजः सहोवलवतां कर्माहं विद्धि सात्त्वताम् ।
सात्त्वतां नवमूर्तीनामादिमूर्तिरहं पुरा ॥
विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् ।
भूधराणामहं स्थैर्यं गन्धमात्रमहं भुवः ॥
अपां रसश्च परमस्तेजिष्ठानां विभावसुः ।
प्रभा सूर्येन्दुताराणां शब्दोऽहं नभसः परः ॥
ब्रह्मण्यानां वलिरहं वीराणामहमर्जुनः ।
भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः ॥
गत्युक्त्युत्सर्गोपादानमानन्दस्पर्शलक्षणः ।
आस्वादश्रुत्यवघ्राणमहं सर्वेन्द्रियेन्द्रियः ॥
पृथिवी वायुराकाश आपो ज्योतिरहं महान् ।
विकारः पुरुषोऽव्यक्तं रजः सत्त्वं तमः परम् ।
अहमेतत्प्रसङ्ख्यानं ज्ञानं तत्त्वविनिश्चयः ॥

**(रा)** सङ्क्षेपेण कारणं दर्शयन्नुपसंहरति **नान्त इति** । **अन्तः** पर्यवसितिः । अत्र एष इति पदमावर्तते । एष 'अहमात्मा गुडाकेशः' इति 'आदित्यानामहं विष्णुः' इत्यादिना विभूतिरूपसङ्क्षेप उद्देशतः शृङ्गग्राहिकया इदमिति, विशिष्य निर्देशेन **मया प्रोक्तः** । एष तु वक्ष्यमाणतया हृदिस्थस्तु **विभूतेर्विस्तरः** । मया प्रोक्तः प्रोच्यते । वर्तमाने निष्ठाप्रत्ययः । पुरा प्रोक्त इति वाऽर्थः ॥४०॥

**यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥४१॥**

**(वि) विस्तारकाङ्क्षिणं प्रति सामान्यतो विस्तारमाह - यद्यदिति । यद्वि-भूत्यादिमत्सत्वं विष्णुकपिलरामद्वयकृष्णव्यासादिकं तत्तन्मम तेजोंऽशस्य सम्भवं प्रादुर्भावमवगच्छ । तथा यद्यद्विभूत्यादिमत्सत्वं श्रीब्रह्मरुद्रादिकं तत्तन्मम तेजोंऽशेन सम्भवः सम्बन्धो यस्य तदवगच्छ ॥४१॥**

**(रा)** तमेव विभूतिविस्तरं लक्षणोक्त्याऽऽह - **यद्यदिति** । **यद्यत् सत्वं** वस्तु **विभूतिमत्** स्वजातितः श्रैष्ठ्योपेतं **श्रीमत्** सम्पद्युक्तम् **ऊर्जितम्**

---

मयेश्वरेण जीवेन गुणेन गुणिना विना ।
सर्वात्मनाऽपि सर्वेण न भावो विद्यते क्वचित् ॥
सङ्ख्यानं परमाणूनां कालेन क्रियते मया ।
न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥
तेजः श्रीः कीर्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ।
वीर्यं तितिक्षा विज्ञानं यत्रयत्र स मेंऽशकः ॥
एतास्ते कीर्तिताः सर्वाः सङ्क्षेपेण विभूतयः ।
मनोविकारा एते वै यथा वाचाऽभिधीयते ॥
वाच्यं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च ।
आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥
यो वै वाङ्मनसी सम्यङ् न संयच्छेद्धिया यतिः ।
तस्य व्रतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥
तस्माद्वचोमनःप्राणान् नियच्छेन्मत्परायणः ।
मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥
- इति श्रीमद्भागवते एकादशस्कन्धे श्रीकृष्णोद्धवसंवादे विभूतिनिरूपणम् (षोडशोध्यायः) ।

अभिवद्ध्युपेतं वा । तत्तद्वस्तु मम [१]तेजोरूपेण प्रकाशरूपेणांशेन सह भवतीति तेजोंऽशसम्भवम् । एवावगच्छ जानीहि ॥४१॥

**अथवा बहुनैतेन किं[२] ज्ञातेन तवार्जुन ।**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्[३] ॥४२॥**

**॥ इति श्रीमद्भगवद्गीतायां दशमोऽध्यायः ॥**

**(वि) उक्तविस्तरादधिकं विभूतिविस्तारमाह - अथवेति । तत्र तत्र परिच्छिन्नज्ञानादहं कोटिकोट्यैकदेशेन सर्वजगद्व्याप्य स्थितः इत्यपरिच्छिन्नभगवद्दर्शनं प्रधानमिति ज्ञापनार्थं 'किं ज्ञातेन' इत्युक्तम् । न तूक्तनिष्फलत्वज्ञापनाय अन्यथोक्तेरेव वैय्यर्थ्यात् । त्वं तु बहुफल-प्राप्तियोग्य इति तवेति विशेषणम् । उक्तं च -**

**"अन्याधिक्यज्ञापनार्थं शुभं चाक्षिप्यते क्वचित् ।**
**न तावताऽस्य निन्द्यत्वं ज्ञेयैवान्यवरिष्ठता ।**
**उभयं मिलितं चैव ततोऽभ्यधिकशोभनम् ॥"[४] इति ॥४२॥**

॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीविद्याधिराजकृतायां दशमोऽध्यायः ॥१०॥

**(रा)** लक्षणमुखेनोक्ततत्तद्वस्तुनिष्ठविभूतिविस्तरादप्यधिकविभूतिविस्तरमाह - **अथवेति । अथवेति** पक्षान्तरे । **एतेन बहुना** विभूत्यादियुक्तरविप्रभृतितत्तद्वस्तुनिष्ठ-परिच्छिन्नविभूतिरूपाणाम् । विस्तरेण **ज्ञातेन तव किम्** । न किमपि फलम् ।

---

१. यद्यद्धरेः सन्निहितं तत्तच्छुद्धतरं मतम् ।
स्वतः शुचितमो विष्णुः सान्निध्यं च स्वभावतः -इति च ॥ भा.ता.(११/२१/६)

२. आक्षिप्यते किमित्येतद्यतोऽल्पफलता भवेत् ।
वस्तुनो यस्य चाल्पत्वं पुंसो वा नेति चोच्यते ॥ इति प्रकाशसंहितायाम् ।
-भा.ता. (२/७/५३)

३. न तदस्ति क्वचिद्राजन् यत्राहं न प्रतिष्ठितः ।
न च तद् विद्यते भूतं मयि यन्न प्रतिष्ठितम् ॥ -भारते (आश्व. ९२)

४. गी.ता. उदाहृतप्रमाणवचनम् ।

वक्ष्यमाणव्याप्तज्ञानफलादल्पफलत्वादाक्षेपः[१] । न तु वैफल्यादिति भावः । तर्हि किं ज्ञातव्यमित्यत आह - **विष्टभ्येति** । इदं प्रमाणावगतं **कृत्स्नं जगदेकांशेन,** अनन्तांशमध्ये एकांशेनैव । **विष्टभ्य** व्याप्य । **स्थितः** । सर्वांशेन व्याप्तुं जगत्सहस्रमपि नालम् । अतः तादृशापर्यवसितव्याप्तिमानहम् । अतस्तज्ज्ञान-मावश्यकमिति भावः ।

न चैतज्ज्ञानादेव मोक्षसिद्धौ प्रागुक्तपरिच्छिन्नविभूतिरूपाणां ज्ञानं व्यर्थमिति तदुक्तिर्व्यर्थेति शङ्क्यम् । 'अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को विमुच्येत बन्धात्'[२] इति श्रुत्या प्रागुक्तज्ञानस्यावश्यकत्वात् । महाफलाधि-कारित्वात् तवोभयज्ञानमावश्यकम् । न विशेषज्ञानमात्रेणालमिति तवैतेन ज्ञातेन किमिति भावेन तवेत्युक्तम् ॥४२॥

॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते दशमोऽध्यायः ॥

*****

---

१. रागद्वेषौ यदि स्यातां तपसा किं प्रयोजनम् ।
तावुभौ यदि न स्यातां तपसा किं प्रयोजनम् ॥ - गी.भा.

कुरुक्षेत्रेण किं तस्य किं काश्या पुष्करेण किम् ।
जिह्वाग्रे वर्तते यस्य हरिरित्यक्षरद्वयम् ॥ - कृ.म. ७२

किं तस्य बहुभिस्तीर्थैः किं तपोभिः किमध्वरैः ।
यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ - कृ.म.५०

२. ऋग्वेदखिले - गी.भा.

# [1]एकादशोऽध्यायः

**अर्जुन उवाच**

**मदनुग्रहाय परमं गुह्यमध्यात्मसञ्ज्ञितम् ।**
**यत् त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥**

**(वि) अत्र दशमान्तोक्तव्याप्तरूपध्यानार्थं विश्वरूपस्थितिरुच्यते । विश्वरूपं भगवन्तं ज्ञातुकामः पूर्वोक्तमर्थमनुवदन् अर्जुन उवाच** - मदनुग्रहा-येत्यादिना । **पूर्वषट्के मामनुगृहीतुमात्मज्ञानतदुपायकर्मसमाधियोगप्रतिपादकं गोप्यं यद्वचः त्वयोक्तं तेनायं मे मोहो विगतो दूरं निरस्तः ॥१॥**

**(रा)** पूर्वान्ते 'विष्टभ्याहमिदं कृत्स्नम्' इति व्याप्तरूपोपासनं सङ्क्षेपेणोक्तम् । सङ्क्षेपेणोक्तरूपस्य बुद्धावनारोहेणाशक्यध्यानत्वात् तद्ध्यानसौकर्याय प्राक् सङ्क्षेपेणोक्तविश्वरूपस्थितिरत्र विस्तरेणोच्यत इति पूर्वानन्तर्यमर्थभेदश्चास्येति ध्येयम् । विश्वरूपं ज्ञातुं तत्प्रष्टुकामः प्रागुक्तमनुवदत्यर्जुनः - **मदनुग्रहाय** इति द्वाभ्याम् । **परमं गुह्यम्** अतिगोप्यम् । आत्मानं भगवन्तं अधिकृत्य स्थितम् **अध्यात्मम्** । अध्यात्मनामकं **यद्वचः त्वया मदनुग्रहायोक्तम्** । **तेन** बन्धुस्नेहादिरूपः । **अयं मोहो विगतः** अपगतः **मम** ॥१॥

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥२॥**

**(वि) तथा सप्तमादौ भूतानां भवदधीनं जन्मादिकं त्वन्माहात्म्यं चोक्तम् । मया श्रुतम् ॥२॥**

**(रा)** हे कमलदलवदायतनेत्र ! **त्वत्तः भूतानां भवाप्ययौ** । 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा'[2] इत्यादिना सप्तमाध्यायादिषु **विस्तरशो मया श्रुतौ अव्ययं माहात्म्यमपि च** श्रुतम् ॥२॥

---

१. यथा श्रुते ध्यानं शक्यं तथा स्वरूपस्थितिरनेनाध्यायेनोच्यते - गी.भा.

२. गी. (७-३)

**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ।**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम[1] ॥३॥**

**(वि) एवमेतत् तथ्यम् । यथा त्वमात्मानमात्थ ब्रवीषि । तं ऐश्वर-मचिन्त्यशक्तिस्वभावरूपम् । साक्षात्कर्तुमिच्छामि ॥३॥**

**(रा)** तद्वचनं स्तुवन् ज्ञातव्यविश्वरूपाविर्भावं प्रार्थयते - **एवम्** इत्यादि द्वाभ्याम् । हे परमेश्वर ! यथा येन प्रकारेणात्मानं **त्वमात्थ** वदसि । एतद्वचनम् **एवमेव** सत्यमेव । हे **पुरुषोत्तम ! ऐश्वरम्** अचिन्त्यशक्तिकम् । **ते रूपं द्रष्टुमिच्छामि** ॥३॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥**

**(वि) प्रभोऽतीन्द्रियदर्शने समर्थ । त्वद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे । तर्हि मे अव्ययमात्मानं स्वरूपभूतमेव स्वरूपं दर्शय ॥४॥**

**(रा)** हे **प्रभो** ! समर्थ । तद्रूपं **मया द्रष्टुं शक्यमिति यदि मन्यसे** । **तत**-स्तर्हि **योगेश्वर** सर्वोपायपते ! **त्वमव्ययमात्मानं** स्वरूपम् । **मे** मह्यं **दर्शय** । प्रार्थनायां लोट् । प्रभो इति वचनं तवातिसमर्थत्वात् त्वच्छक्त्या एवातीन्द्रिय-स्यापि दर्शनं स्यादिति ज्ञापनाय ॥४॥

**श्रीभगवानुवाच**

**पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥**

**(वि) एवं कौतूहलान्वितेन पार्थेन प्रार्थितो भगवानुवाच-** पश्येत्यादिना। **एकस्यैवाभिन्नानन्तरूपत्वाद्रूपाणि शतश इत्याद्युक्तम् । उक्तं च -**

१. 'नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः'; 'अव्ययः पुरुषोत्तमः' - इति (वि.स.)

"एकं रूपं हरेर्नित्यमचिन्त्यैश्वर्ययोगतः ।
बहुसङ्ख्यागोचरं च विशेषादेव केवलम् ॥"[1]

**इति । तानि रूपाणि नानाविधानि दिव्यान्यप्राकृतानि । वर्णः शुक्लादिः आकृतिरवयवसन्निवेशः । तौ नाना येषां तानि नानावर्णाकृतीनि पश्य ॥५॥**

**(रा)** एवं कौतूहलान्वितेन पार्थेन प्रार्थितो भगवान् रूपं दिदर्शयिपुरादौ दर्शनं कुर्विति विधत्ते - **पश्य** इत्यादिना चतुष्टयेन । ते रूपं द्रष्टुमिच्छामीत्येकरूपदृष्टिप्रार्थनेऽपि **दिव्यानि** अप्राकृतानि। नानाभूताः शुक्लादिवर्णाः आकृतयः संस्थानविशेषाः येषां तानि । **शतशः सहस्रशः** बहूनीति यावत् । 'मे रूपाणि पार्थ पश्य' इति बहुरूपदर्शनोक्तिः एकस्यैव रूपस्याचिन्त्यशक्त्या विशेषबलेन च ाानन्तरूपसमुदायात्मकत्वाभिप्रायेणेति ज्ञेयम् । **नानाविधानीत्यस्य विवरणं नानावर्णेत्यादि** ॥५॥

**पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥६॥**

**(वि) ममैकस्मिन् रूपे । आदित्यादीन् पश्य । तथा लोके शास्त्रे चादृष्टपूर्वाणि बहून्याश्चर्याणि पश्य ॥६॥**

**(रा)** पश्येत्युक्तौ कस्तत्र विशेष इत्यत आह - **पश्येति** । द्वादशा**दित्यान्**, अष्टौ **वसून्**, एकादश**रुद्रान्**, पञ्चाशन्**मरुतः** । **तथा**शब्दः समुच्चये । **अदृष्टपूर्वाणि** पूर्वमदृष्टानि **बहूनि आश्चर्याणि** अद्भुतानि च ॥६॥

**इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् ।**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥७॥**

**(वि) इह ममैकस्मिन् देहे । तत्राप्येकस्थम्, एकदेशस्थम् । जगत् पश्य । यच्चान्यद्द्रष्टुमिच्छसि तदप्येकदेशस्थमेव पश्य । त्वद्विवक्षितमहं सर्वं दर्शयिष्यामि ॥**

---

१. ब्रह्मतर्कवचनम् - गी.ता. (११-९)

**(रा) मम देहे** मदीये रूपे **पश्य** । 'कृत्स्नम्' इत्यस्य विवरणं 'सचराचरम्' इति । **जगदिह** तव प्रदर्शनीये **मम देहे । एकस्थम्** एकदेशस्थम् **अद्य पश्य** । हे **गुडाकेश** जितनिद्र । **यच्चान्यद्द्रष्टुमिच्छसि** । तत् सर्वम् । **मम देहे पश्य** ॥

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥**

**(वि) त्वं त्वनेन प्राकृतेन स्वचक्षुषा । मां विश्वरूपम् । द्रष्टुं न शक्यसे । अतस्ते दिव्यं चक्षुर्ददामि । मम सामर्थ्यं पश्येति ॥८॥**

**(रा)** त्वं द्रष्टुमिच्छसि । मयाऽप्युच्यते पश्येति । तथाऽपि त्वम् । **त्वनेन स्वचक्षुषा मां द्रष्टुम्** । **न शक्यसे** न शक्तो भविष्यसि । **अतस्ते** । **दिव्यम्** अलौकिकम् । **चक्षुर्ददामि** दर्शनशक्तिं ददामि । **ऐश्वरम्** ईश्वरभूतमत्सम्बन्धि । **योगं** सामर्थ्यम् । **पश्येति** ॥८॥

**सञ्जय उवाच**

**एवमुक्त्वा ततो राजन् महायोगेश्वरो हरिः ।**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥**

**(वि) अनन्तरं वृत्तान्तं धृतराष्ट्रं प्रति सञ्जय उवाच** - एवमित्यादिना **॥९॥**

**(रा)** अनन्तरवृत्तान्तं धृतराष्ट्रं प्रति सञ्जय उवाच । तदाह - **एवमिति** । 'पश्य मे पार्थ रूपाणि' इत्यादिप्रकारेणो**क्त्वा** इत्यर्थः । महतां योगानामुपायानां अनन्तशक्तीनां वेश्वरः । कुत एतदित्यत उक्तम् - **हरिरिति** । सर्वयज्ञादिभाग-हरणाद्धरिः । **परमम्** अनेकविभवोपेतम् ।

'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः ॥'[१]

---

१. भारतशान्तिपर्व(मोक्षधर्म)वचनम् (३४२-६८) - गी.भा.

इति मोक्षधर्मोक्तेः । गेहेषु इष्टिगृहेष्वित्यर्थः । हरतेरिकारप्रत्ययः । अप्राकृतविग्रहस्य साकारस्यानन्तपूजास्थानेषु युगपत्सन्निधानेन भागहारिणो महायोगेश्वरत्वं किं वक्तव्यमिति भावः ॥९॥

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥**

**(वि) अनेकवक्त्रेत्यादावनेकशब्दोऽनन्तवाची । 'अनन्तबाहुम्' इत्यादेः अनेकमद्भुतानां दर्शनं यस्मिन्नित्यनेकाद्भुतदर्शनम् ॥१०॥**

**(रा)** तद्रूपमाह - **अनेकेति** । अनेकानि वक्त्राणि नयनानि यस्य तत् । अनेकशब्दोऽनन्तवाची । अनेकेषामद्भुतानां दर्शनं यस्मिन्नित्यनेकाद्भुतदर्शनं रूपं दर्शयामासेत्यनुषङ्गः ॥१०॥

**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥**

**(वि) सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् । देवं क्रीडादिगुणयुक्तम् । अनन्तं देशतः कालतो गुणतश्च परिच्छेदरहितम् । विश्वतोमुखम् अनन्तमुखम्। दर्शयामास ॥११॥**

**(रा) सर्वाश्चर्यमयं** सर्वाश्चर्यात्मकम् । [1]तादात्म्यार्थे मयट् । **देवं** क्रीडादिगुणम् । **अनन्तं** देशकालगुणापरिच्छिन्नम् । **विश्वतोमुखं** सर्वदिक्षु मुखं यस्य तद्विश्वतोमुखम् । अनन्तमुखमिति वा ॥११॥

**दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।**
**यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥**

**(वि) किंच दिवि आकाशे । सूर्यसहस्रस्य युगपदुत्थितस्य या युगपदुत्थिता । भाः प्रभा भवेत् । तर्हि सा महात्मनो विश्वरूपस्य । भासः प्रभायाः । कथञ्चित् सदृशी स्यात् । नान्योपमास्तीत्यर्थः । अत्र**

---

१. तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा ॥ इति शब्दनिर्णये ।

[१]सहस्रशब्दोऽनन्तवाची । तदपि 'पाकशासनविक्रमः' इत्यादिवत् प्रत्यायनार्थमेव । भगवतोऽपरिमिततेजस्त्वात् ॥१२॥

(रा) किंच दिवि आकाशे । सूर्यसहस्रस्यानन्तसूर्यराशेः युगपदुत्थितस्येति शेषः । प्रभा युगपदुत्थिता स्यात् । सा प्रभा तस्य महात्मनो विश्वरूपस्य । भासः प्रभायाः । सदृशी स्यात् । नान्याऽस्त्युपमेत्यर्थः ॥१२॥

**तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तमनेकधा ।**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥**

(वि) तत्र रूपे । एकदेशे स्थितम् । अनेकधा प्रविभक्तम् । देवमनुष्यादिनानाभेदेन विकासेन चावस्थितम् । कृत्स्नं जगदपश्यत् ॥१३॥

(रा) ततः किं जातमित्यत आह - तत्रेति । भगवता प्रदर्शिते सति देवदेवस्य शरीरे विश्वरूपे । देवदानवमानवादिभेदेनानेकधा प्रविभक्तम् । कृत्स्नं जगदेकस्थम् एकदेशस्थम् । तदाऽपश्यत् ॥१३॥

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।**
**प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥१४॥**

(वि) ततो दृष्ट्वा । विश्वरूपानुवादव्याजेन स्तोतुमारभते तत इति ॥१४॥

(रा) दर्शनानन्तरं किमकरोदित्यत आह तत इति । दर्शनानन्तरम् ॥

**अर्जुन उवाच**

**पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥**

(वि) स्तुतिप्रकारमाह - पश्यामीत्यादिना । ब्रह्माणं चतुर्मुखम् । कमलासने ब्रह्मणि स्थितम् । ईशं रुद्रम् । उक्तं च -

१. शतं शतसहस्रं तु सर्वमक्षय्यवाचकम् । - भारते (आदि. २१६/८)

**"विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्कगतो हरः ।**
**हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः ॥"[१] इति ॥१५॥**

**(रा)** किमभाषतेत्यतो दृष्टरूपानुवादपूर्वं स्तुतिमकरोदित्याह - **अर्जुन उवाचेत्यादिना । सर्वान् देवान्** । सर्वान् प्राणिविशेषसमूहांश्च इत्यर्थः । **ब्रह्माणं** चतुर्मुखम् । कमलासने चतुर्मुखे स्थितम् ईशं रुद्रम् । तदुक्तं पाद्मे-

'विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्कगतो हरः ।
हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः ॥'

इति । **तव देहे । देवानित्यत्रापि** परम्परयेति ज्ञेयम् । **दिव्यानद्भुतानुरगान्** सर्पांश्च **तव देहे पश्यामि** ॥१५॥

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप[२] ॥१६॥**

**(वि) अनन्तरूपम् असङ्ख्यातरूपम् । हे विश्वरूप पूर्णरूप । सर्वं समस्तं विश्वं च । 'अनन्तं पूर्णमेव च' इत्यभिधानात् । अन्ताद्यभावेनैव मध्याभावः - सिद्धः । पुनर्नमध्यमित्युपचारपरिहारायोक्तम् ॥१६॥**

**(रा) अनेकबाहूदरवक्त्रनेत्रम्** इत्यत्रापि 'अनेकनयनम्' इत्यत्रेवानेकशब्दो अनन्तवाची । प्रागुक्तानुवादरूपत्वादपौनरुक्त्यम् । **सर्वतः** सर्वस्मिन् देशे । अनन्तानि अपरिमितानि रूपाणि यस्य तम् । हे **विश्वरूप** पूर्णरूप ! "सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव च[३]" इत्युक्तेः । **विश्वेश्वर** जगत्पते । **तवादिं मध्यम् अन्तं वा न पश्यामि** । नञः त्रिरुक्तिरादरार्था । अत एवाद्यन्तयो-रभावादेव मध्याभावसिद्धौ पुनर्मध्यं नेत्युपचारनिवृत्त्यर्थम् ॥१६॥

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥**

---

१. पाद्मवचनम् । - गी.ता.
२. जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते । - भा.ता. (४/२०/२०)
३. अभिधानवचनम् - गी.भा.

**(वि) अनलार्कद्युतिमित्युक्ते परिमितत्वशङ्का स्यात्, तन्निरासायोक्तम् अप्रमेयमिति ॥१७॥**

**(रा)** दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिः प्रकाशो यस्य तमित्युक्त्या प्राप्तपरिमितशङ्काव्युदासायोक्तम् - **अप्रमेयमिति** । अमितद्युतिमित्यर्थः ॥१७॥

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥**

**(वि) शाश्वतधर्मगोप्ता वैदिकधर्माविता ॥१८॥**

**(रा) परं निधानं** मुख्याश्रयः । **शाश्वतधर्मगोप्ता** अनादिपरम्पराप्राप्तधर्मरक्षकः । **अव्ययो** ह्रासहीनः। **सनातनो**ऽनादिनित्यः । **पुरुषो मे मतः** ॥१८॥

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥**

**(वि) अनादिमध्यान्तं गुणानन्त्यापेक्षया । शशिसूर्याश्रयनेत्रं तन्नामकनेत्रं वा -**

**'यस्माद्यज्जायते चाङ्गाल्लोकवेदादिकं हरेः ।**
**तन्नामवाच्यमङ्गं तद्यथा ब्रह्मादिकं मुखम् ॥'[1] इति वचनात् ॥१९॥**

**(रा) अनादिमध्यान्तम्** आदिमध्यान्तशून्यम् । गुणतोऽत्रादिमध्यान्तहीनत्वमुच्यते । 'नान्तं न मध्यम्' इत्यत्र देशतः । अतो न पौनरुक्त्यम् । शशिसूर्यौ नेत्रयोर्यस्य तमिति वा । जन्यजनकभावेन वाऽभेदोक्तिः । देवानां बहुरूपत्वादनेकाश्रयत्वं युक्तमिति । 'चन्द्रमा मनसो जातः'[2] इति मनोजाततया तदाश्रयत्वमप्यविरुद्धम् । **दीप्तहुताशवक्त्रम्** इति जन्यजनकभावेनाश्रयाश्रयिभावेन वेति ध्येयम् ॥१९॥

---

१. नारदीयवचनम् - ब्र.सू.भा. १-३-२६;
२. ऋग्वेदे पुरुषसूक्ते

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥२०॥**

**(वि) द्यावापृथिव्योरन्तरमेकेनैव रूपेण व्याप्तम् । विश्वरूपदर्शनस्य भयहेतुत्वं न सर्वेषां सर्वदा । किन्तु केषुचित् कारणविशेषेषु कदाचिदेव । उक्तं च -**

**"त्रिलोकेषु स्थितैर्भक्तैरर्जुनाय प्रदर्शितम् ।**
**दृष्टं विष्णोर्विश्वरूपं स्वयोग्यत्वानुसारतः ॥**
**प्रायः सहैव पार्थेन प्रायो भीताश्च तेऽखिलाः ।**
**दर्शनाभ्यासतो दृष्टिरानन्दोद्रेकता भवेत् ॥**
**तस्मिन् काले च भूमेश्च भारहारार्थमुद्यमात् ।**
**उग्रत्वमिव सर्वत्र न भीतिर्ब्रह्मदर्शिनाम् ॥**
**अर्जुनादधिका ये तु तेषां भीतिर्न चाभवत् ।**
**श्रीब्रह्मरुद्रपूर्वाणां कृष्णाया भीमरामयोः ॥"[1]**

**इति । अथवा - विश्वरूपदर्शनार्थं यतमानानां लोकत्रयस्थानां पुंसाम् । तददृष्ट्वाऽपि चेतसि निरूप्य स्थितानां भये जाते सति तद्द्रष्टुरर्जुनस्याहमिवैतेऽपि दृष्ट्वा बिभ्यतीति बुद्धिर्जाता । अतो लोकत्रयं दृष्ट्वा प्रव्यथितमित्याह ।**

**"दृष्ट्वा देवं मोदमाना अदृष्ट्वाऽप्येतद्भयाद्बिभ्यतोऽदृष्टवत् ते ।**
**पश्यन्ति तन्न्यस्तचक्षुर्मुखांस्तु तस्मिन्नेवैते मनसो गतत्वात् ॥"[2]**

**इति च श्रुतिः ॥२०॥**

**(रा) द्यावापृथिव्योरिदमन्तरं** मध्यम् । **एकेन त्वया** एकरूपेण व्याप्तम् । रूपान्तरैस्तु **सर्वा दिशो** व्याप्ता इत्यर्थः । त्वयेत्येकवचनेनैवैकेनेति लाभे पुनरेकेनेत्युक्तिः एकेन रूपेण द्यावापृथिव्यन्तरव्याप्तिसूचनाय । हे **महात्मन्** । **तवेदमुग्रं** भयङ्करम् । **अद्भुतं रूपं दृष्ट्वा लोकत्रयम्** । **प्रव्यथितं** अतिभीतं

---

१. आग्नेयवचनम् । - गी.ता.(११/२०)
२. गौतमखिलवचनम् । - गी.भा.(११/२०)

पश्यामीत्यन्वयः । भूमेर्भारहाराय प्रवृत्तत्वादुग्रमिव न तूग्रमेव । तदुग्रत्वमपि केषाञ्चित् संहार्यत्वकारणविशेषादनभ्यासरूपकारणाद्वा । अभ्यासे तु आनन्द एव तद्दर्शनाद्भवति । अत्र लोकत्रयपदेन लोकत्रयस्थभक्तवर्गग्रहः । अभक्तानां तद्दृष्टेरेवाभावात्[१] । यद्वा - तद्रूपमदृष्ट्वाऽपि मनसा तदनुसन्धायैव बिभ्यज्जनं दृष्ट्वाऽर्जुनोऽहमिव एतेऽपि दृष्ट्वा बिभ्यतीति बुद्ध्वा **लोकत्रयं प्रव्यथितं पश्यामीत्याहे**ति ज्ञेयम् । अस्मिन् पक्षे लोकत्रयशब्दो भक्ताभक्तवर्गपरः ॥२०॥

**अमी हि त्वां सुरसङ्घा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः॥२१॥**

**(वि) अमी मुक्ताः सुरसङ्घाः । त्वां विशन्ति । 'प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत्'[२] इति वचनात् ॥२१॥**

**(रा)** अन्यदपि स्वदृष्टमाहार्जुनः - **अमी हीति** । **सुरसङ्घाः** मुक्तदेववर्गाः । 'प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत्' इति वचनात् । तेन 'पश्यामि देवांस्तव देव देहे' इत्यनेन न पौनरुक्त्यम् । अत्र मुक्तानां तत्रामुक्तानामुक्तेः । **पुष्कलाभि**र्गुणपूर्णाभिः **स्तुतिभिः स्तुवन्ति** ॥२१॥

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।**
**गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥**

**(वि) उष्मपाः पितरः 'ऊष्मभागा हि पितरः'इति श्रुतेः । गन्धर्वादीनां सङ्घाः ॥२२॥**

**(रा) ऊष्मपाः** पितरः 'ऊष्मभागा हि पितरः' इति श्रुतेः । गन्धर्वादीनां सङ्घाः ॥२२॥

---

१. दुर्योधनादिषु चैतद्दृष्टम् -
'तत्कालसूर्यामितदीप्ति सर्वजगद्धरं शाश्वतमप्रमेयम् ।
दृष्ट्वैव चक्षूंसि सुयोधनाद्या न्यमीलयन् दीधितिवारितानि ॥' ता.नि.(२४/८१)इत्युक्तेः।
२. ब्रह्माण्डवचनम् । - गी.ता.(११/२१)

**रूपं महत् ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥२३॥**

**(वि) रूपेत्यादिना ॥२३॥**

**(रा) बहुदंष्ट्राभिः करालं** विरूपम् । **लोकाः** भक्तवर्गाः । भक्ताभक्त-वर्गार्थत्वे तु लोकत्रयमित्यत्रेवाभिप्रायो ध्येयः । **तथाऽहमपि प्रव्यथितः** ॥

**नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो ॥२४॥**

**(वि) व्यात्ताननं विवृतमुखम् ॥२४॥**

**(रा) व्यात्ताननं** विवृतमुखम् । **अन्तरात्मा मनः। न विन्दामि** न प्राप्नोमि । **शमं** सुखं **च । न विन्दामि** । न प्राप्नोमि । **विष्णु**शब्दार्थ उक्तः दशमेऽध्याये ॥२४॥

**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥२५॥**

**(वि) दंष्ट्राभिः करालानि विरूपाणि ॥२५॥**

**(रा) दंष्ट्राकरालानि** दंष्ट्राभिर्विरूपाणि । **कालेति** प्रलयकालाग्निसन्निभानि समप्रभाणि । **न जाने** न जानामि । **शर्म** सुखं **च न विन्दामि** । **जग-न्निवास** जगदाधार ॥२५॥

**अमी च त्वा धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसङ्घैः ।**
**भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ॥२६॥**

**(वि) [1]सूतपुत्रः कर्णः ॥२६॥**

---

१. अक्षत्रसंस्कारयुतो जातोऽपि क्षत्रिये कुले ।
न क्षत्रियो हि भवति यथा व्रात्यो द्विजोत्तमः ॥(म.भा.ता.नि. १८/३९)
इत्युक्तेः कर्णस्य सूतपुत्रत्वमेव ।

(रा) त्वा त्वाम् । सूतपुत्रः कर्णः । **योधमुख्यैः** योधेषु भटेषु प्रधानैः । **अस्मदीयैः** सह ॥२६॥

**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ।**
**केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥**

**(वि) भगवन्मुखप्रवेशादुन्मुखचेष्टानामपि भगवन्मुखचेष्टयैव तत्र प्रवेशात् 'प्रलयोदकं प्रजाः विशन्ति' इतिवदुपचारेण । अमी दुर्योधनादयः। वक्त्राणि विशन्तीति प्रयोगः। सेनामध्ये भगवन्मुखानामुभयाभिमुखत्वात् । सहास्मदीयैरपि इत्युक्तम् । येषामुत्तरक्षणे मरणं ते । दन्तमध्येषु संलग्नाश्चूर्णितैरुत्तमाङ्गैः शिरोभिरुपलक्षिताः दृश्यन्ते । यथा-भिन्नं घटादिकं पृथगपतितमङ्गैरदृष्टमपि सूक्ष्मदृष्टिभिर्ज्ञायते । यथा पुरूरवसो जरा अश्विभ्यामेव दृष्टा तथेति ॥२७॥**

(रा) ते प्रागुक्तधृतराष्ट्रपुत्रादयः । ते तव । **वक्त्राणि विशन्ति** इत्यत्र तेषां भगवन्मुखाभिमुखचेष्टाभावेऽपि भगवानेवानेकमुखैः सेनाद्वयस्थयोधान् ग्रसित्वा तिष्ठतीत्युपचारेण विशन्तीत्युक्तिः ज्ञेया । एवमग्रेऽपि । **केचित्** तस्मिन् मुहूर्त एव मरिष्यमाणाः । **केचिद्दशनान्तरेषु विलग्नाः । चूर्णितैः** । शतशः सूक्ष्म-रेखोपेतशीर्णघटवत् शतशः । सूक्ष्मरेखोपेततया **भिन्नैः उत्तमाङ्गैः** शिरोभि-रुपलक्षिताः सन्तः । **दृश्यन्ते** मयेत्यर्थः । मन्ददृष्टीनामन्येषां तथा दृष्ट्यभावेऽप्यर्जुनस्य दिव्यदृष्टिमत्त्वात् तथा दर्शनं युक्तमिति ज्ञेयम् । यथाऽन्यैरदृष्टस्यापि पुरूरवसो जराऽश्विभ्यां दृष्टा तथेति । व्यक्तमेतद्विष्णुधर्मे एकोनविंशेऽध्याये ।[१]

---

१. तथाहि - पुरूरवसो रूपं द्रष्टुमागताश्विनौ प्रति पुरूरवो राजा तैलाभ्यक्तः सन् स्नातः भूषणयुतः सन्नागमिष्यामि तदा मद्रूपं द्रष्टव्यमित्युक्ते -
अप्रसाधितमेवाशु भवन्तं वसुधाधिप ।
पश्यावो भूपितं त्वां वै वस्त्रालङ्करणान्वितम् ।
-इत्याश्विभ्यामुक्ते तूर्ष्णीं बहिर्गतस्य राज्ञः साङ्गोपाङ्गादिकं सर्वं समपश्यताम् ।

**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ।**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥**

**(वि) विज्वलन्ति दीप्यमानानि मुखानि विशन्ति ॥२८॥**

(रा) विज्वलन्ति दीप्यमानानि वक्त्राणि ॥२८॥

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥**

**(वि) पतङ्गाः शलभाः ॥२९॥**

(रा) **तवापि वक्त्राणि समृद्धवेगाः** इत्यत्र भगवता अतितीव्रं ग्रस्यमानत्वात् तथोपचर्यत इति भावः ॥२९॥

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः ।**
**तेजोभिरापूर्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥**

**(वि) कोपेन रुधिरावसिक्तमोष्ठपुटादिकम् । लेलिह्यसे पुनःपुनर्लेहनं करोषि ॥३०॥**

---

शिरोललाटवाह्वास्यनयनादिविलोकनम् ।
कृत्वा चिरं महीपालमूचुतुस्तावरिन्दमौ ।
प्रविश्य स्नास्व भूपाल यथार्हैश्च विभूषणैः ।
विभूपिततनुं भूयस्त्वां द्रक्ष्यामो नरेश्वरम् ।
-इत्यश्विभ्यामुक्तो राजा गृहं प्रविश्य स्नात्वाऽनुलिप्तो वस्त्रालङ्कारादिभूषितः सन्नश्विनोः समीपमागतः । तदा तौ तद्रूपं दृष्ट्वा हासं चक्रतुः । तदा राज्ञा हासकारणे पृष्टे-

श्रुणु भूपाल सकलमावयोर्हासकारणम् ।
युष्मद्दर्शनसम्भूतं क्षणापचयहेतुकम् ।
अतस्तस्याभवत् पूर्वं यादृशी ते सुरूपता ।
साम्प्रतं तादृशी नेयं भूपितस्यापि भूषणैः ।
दिव्येन चक्षुपा भूप कालस्यास्य च तस्य च ।
वपुःपरिणतिं स्वस्मात् पश्यावोऽपचयप्रदाम्। इत्यादिनेति भावः । - इत्यधिकः पाठः ।

**(रा) समग्रान् लोकान् जनान् ज्वलद्भिर्वदनैः समन्ताद्ग्रसमानः** मुखान्तःकुर्वाणः **लेलीह्यसे** । कोपेन रुधिरावसिक्तमोष्ठपुटादिकं जिह्वाग्रेणा-स्वादयसीव असकृत् स्पृशसि । हे **विष्णो ! तवोग्राः** तीक्ष्णाः । **भासः** प्रभाः । **तेजोभिः** प्रकाशनशक्तिभिः । **समग्रं जगदापूर्य** व्याप्य । **प्रतपन्ति** देहादिपदार्थेपूष्माणं जनयन्ति ॥३०॥

**आख्याहि मे को[1] भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ।**
**विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम् ॥३१॥**

**(वि) विष्णो इति सम्बोधनात् त्वमक्षरमित्याद्युक्तेश्च विष्णुं तद्धर्मांश्च जानन्नेव गुणकर्मविशेषविज्ञानार्थं पृच्छति** - को भवानिति ॥३१॥

**(रा)** भगवत्स्वरूपं तदीयगुणकर्माणि जानन्नप्यर्जुनः । अज्ञातगुणकर्म-विशेषज्ञानार्थं पृच्छति - **आख्याहीति । उग्ररूपो भवान् कः** किंधर्मकः किमर्थमुग्ररूप इत्यर्थः ॥३१॥

**श्रीभगवानुवाच**

**कालोऽस्मि लोकक्षयकृत् प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः ।**
**ऋतेऽपि त्वां न भविष्यन्ति सर्वे येऽवस्थिताः[2] प्रत्यनीकेषु योधाः ॥३२॥**

**(वि) स्वकीयान् गुणकर्मविशेषान् भगवानुवाच** - काल इति । **कालशब्दो जगद्बन्धनच्छेदनज्ञानादिसर्वधर्मवद्भगवद्वाची । 'कल बन्धने, कल च्छेदने, कल ज्ञाने, कल कामधेनुः'** इति पाठात् । **प्रवृद्धः** परि-

---

१. 'स होवाच त्वामेव जानीयामिति' (ऐतरेय ११/२/३) इतिवत् ज्ञेयम् ।

२. सप्तपाण्डवतः शेषा धार्तराष्ट्रास्त्रयो वयम् ।
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
अहं च कृतवर्मा च कृपः शारद्वतस्तथा । - इति भारते दुर्योधनं प्रति द्रौणिवचनम् ।
- सौप्तिक ११९/४९
अर्जुनं तद्भ्रातॄन्, अश्वत्थामकृतवर्मकृपांश्च विना कुरुपाण्डवसैन्यस्था योधाः सर्वे मरिष्यन्ति इति - श्रीपद्मनाभतीर्थश्रीचरणकृत गी.ता. प्रकाशिकायाम् ।

**पूर्णोऽनादिर्वा । लोकान् समाहर्तुं विशेषेण प्रवृत्तः । अपिशब्दस्य भ्रात्रादीनपि विनेत्यर्थः । अक्षौहिण्यादिभेदेन बहुषु प्रत्यनीकेषु परस्परं प्रतिपक्षभूतेष्वनेकेषु सेनासु । ये अवस्थितास्ते सर्वेऽपि । न भविष्यन्ति ॥३२॥**

**(रा)** एवमर्थितो भगवान् स्वगुणादीनाह [1]**कालोऽस्मीति** । 'कल बन्धने, कल संहरणे, कल ज्ञाने, कल विद्रावणे, कल कामधेनुः' इति धातुपाठात् । पूर्णसद्गुणैः कलितत्वात् सम्बद्धत्वात् कालः । पूर्णसद्गुणोऽस्मीत्यर्थः । तथा जगद्बन्धनसंहरणबोधनविद्रावणादिकर्मयुक्तत्वाच्च **कालोऽस्मी**त्यर्थः । कलतेः कर्मणि कर्तरि च अण् घञ्प्रत्ययो वा । किमर्थमुग्ररूप इत्यस्योत्तरम् - **लोकक्षयकृदित्यादि** । **प्रवृद्धो** देशकालतः परिपूर्णः । अनादिनित्य इति वा । लोकस्य क्षयकृद्भवन्निह युद्धमण्डलगतान् **लोकान्** जनान् प्रत्यक्षत एव संहर्तुं **प्रवृत्तोऽस्मि** । तर्हि पार्थानामपि संहर्तुं प्रवृत्तः किमित्यत आह **ऋतेऽपीति** । **अपि**र्धर्मादिसमुच्चये । धर्मादिपञ्चपाण्डवान्, अश्वत्थामकृतवर्मकृपांश्च विनेत्यर्थः। **प्रत्यनीकेषु परस्परं** प्रतिस्पर्धितया स्थिते सेनाद्वये । अक्षौहिणीवहुत्वाभिप्रायेण बहुवचनम् । **येऽवस्थिता योधास्ते सर्वे न भविष्यन्ती**त्यर्थः ॥३२॥

**तस्मात् त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।**
**मयैवैते निहताः[2] पूर्वमेव निमित्तमात्रं भव [3]सव्यसाचिन् ॥३३॥**

---

१. 'प्रधानो ज्ञानिनां ब्रह्मा ज्ञानमानी हृदि स्थितः ।
स एव कालमानी तु संहर्तृणां प्रभुः स्मृतः ॥ इति विभूतौ । - भा.ता.
कालाख्यः करणाद्विष्णुर्व्यक्तमव्यक्तगं नयन् ॥ इति च । भा.ता. ११/३/८
कालः कलितसम्पूर्णसद्गुणत्वाज्जनार्दनः ।
संहारात् सर्ववित्त्वाद् वा सर्वविद्रावणेन वा ॥ इति महावाराहे । -गी.ता.

२. सपदि सखिवचो निशम्य मध्ये निज परयोर्बलयो रथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥ - भागवते १/९/३५

३. 'उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे ।
तेन देवमनुष्येषु सव्यसाचीति मां विदुः ॥'(भा. ४/४४/१९) इति सव्यसाचिशब्दार्थः

**(वि) 'यद्वा जयेम यदि वा नो जयेयुः' इत्यस्य सन्देहेऽपि प्रवृत्तिर्युक्ता, पक्षद्वयेऽपि फललाभादिति 'हतो वा' इत्युत्तरमुक्तम् । इदानीं तव पराजयशङ्काऽपि नास्तीत्याह - तस्मादिति । मयैवैते सर्वयोधाः । पूर्वमेव निहतप्रायाः । त्वं तु निमित्तमात्रं भव । पश्चादपि त्वयि स्थित्वाऽहमेव तान् हनिष्यामि ॥३३॥**

(रा) पूर्वं द्वितीये 'न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः'[1] इति वदन्तं पार्थं प्रति सन्देहेऽपि युद्धे प्रवृत्तिर्युक्ता । पक्षद्वयेऽपि फललाभात् । 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्'[2] इत्युत्तरमुक्तम् । इदानीं तव पराजयशङ्का नास्तीत्याह - **तस्मादिति** द्वयेन । यस्मादहमेव **लोकान् समाहर्तुम् । इह प्रवृत्तः** । तस्माद्विजये सन्देहाभावात् । **उत्तिष्ठ** योद्धुं सन्नद्धो भव । **शत्रून् जित्वा यशो लभस्व । समृद्धं राज्यं भुङ्क्ष्व । पूर्वमेव मया निहताः** निहतप्रायाः अपहृतायुष्ट्वेन सन्निहितमरणाः सन्ति । तान् प्रत्यक्षतो हन्तुम् । हे **सव्यसाचिन् त्वं निमित्तमात्रं भव** । पश्चादपि त्वयि स्थित्वाऽहमेव हनिष्यामीति भावः ॥३३॥

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधवीरान् ।**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥३४॥**

**(वि) ननु द्रोणो धनुर्विद्याचार्यः, भीष्मः स्वच्छन्दमृत्युः, योऽस्य शिरःच्छिन्नं भूमौ पातयति तच्छिरो भेत्स्यत इति पितुर्वरेणोद्रिक्तः सैन्धवः, कर्णे वासवी शक्तिरस्ति । अन्येऽपि बलिष्ठाः सन्ति । कथं मया जेतुं शक्या इत्यत आह - द्रोणं चेति ॥३४॥**

(रा) ननु द्रोणो धनुर्विद्याचार्यः, भीष्मः स्वच्छन्दमृत्युः, योऽस्य शिरःछित्वा भूमौ पातयेत् तच्छिरो भेत्स्यत इति पितुर्वरेण[3] बलिष्ठः सैन्धवः,

---

१. गी. (२-६) ; २. गी. (२-३७)

३. धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ।
तस्यापि शतधा मूर्धा फलिष्यति न संशयः ॥ - भारते (द्रोण. १३६/११२)

वासवशक्त्या कर्णो बलवान्, एवमन्ये च बलिष्ठाः सन्ति । ते कथं मया जेया इत्यत आह - द्रोणं चेति ॥३४॥

### सञ्जय उवाच

**एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः [१]किरीटी ।**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥**

**(वि) ततोऽर्जुनेन किं कृतमित्यतः सञ्जय उवाच - एतदिति ॥३५॥**

**(रा)** ततः किं जातमिति धार्तराष्ट्रहार्दं परिहर्तुं सञ्जय उवाच किमित्यत आह - **एतदित्यादिना । वेपमानः** भयकम्पिताङ्गः । **भीतभीतः** अत्यन्तभीतः ॥३५॥

### अर्जुन उवाच

**स्थाने [२]हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।**
**रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः॥३६॥**

**(वि) वचनमाह** - स्थान इत्यादिना । **हे कृष्ण । ते तव । कीर्तनेन जगत्प्रहर्षादिकम् । स्थाने युक्तमेव ॥३६॥**

**(रा)** तद्वचनमाह - **स्थान इत्यादिना । हे हृषीकेश !** सर्वेन्द्रियप्रेरक । **तव प्रकीर्त्या । जगत् प्रहृष्यति । अनुरज्यते** चेत्यादि(कं) **स्थाने** । अव्ययमेतत् । युक्तमेवेत्यर्थः ॥३६॥

**कस्माच्च ते न नमेरन् महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।**
**[३]अनन्त देवेश जगन्निवास त्वमक्षरं सदसत् तत्परं यत् ॥३७॥**

---

१. पुरा शक्रेण मे दत्तं युद्ध्यतो दानवर्षभैः ।
किरीटं मूर्ध्नि सूर्याभं तेनाहुर्मां किरीटिनम् ॥(भा. ४/४४/१७) इति किरीटिनामार्थः ।

२. वध्रयस्त्विन्द्रियाण्याहुर्हृषीकाणीति चाप्युत ॥ इति शब्दनिर्णये -भा.ता.(३/३२/१२)

३. 'अनन्तो हुतभुग्भोक्ता' (वि.स.)

**(वि) कथं युक्तमित्यत आह - कस्मादित्यादिना । महात्मन् परिपूर्ण । गरीयसे गुरुतराय । चतुर्मुखमूलभूताय । ते कस्माद्धेतोर्न नमेयुर्नमेयुरेव । अनन्त अपरिच्छिन्न । तत्परं सदसद्भ्यां परम् ॥३७॥**

(रा) कथं युक्तमित्यत आह - **कस्मादिति** । हे **महात्मन्** महांश्चासावात्मा च तस्य सम्बुद्धिः महात्मन् । महच्छब्दोऽत्र पूर्णवाची । आत्मशब्दोऽपि 'यच्चाप्नोति' इत्यादिस्मृतेराप्यादानविषयानुभवनित्यसत्तारूपार्थचतुष्टयवाची । पूर्णाप्त्यादिमान् इत्यर्थः । **गरीयसे** गुरुतमाय । **ब्रह्मणश्चतुर्मुखस्याप्यादिकर्त्रे** । ते तुभ्यं **कस्मान्न नमेरन्** । नमेयुरेव । **अनन्त** अन्तशून्य । देवानामीश । **जगन्निवास** जगदाश्रय। यत्सदसद्भावाभावात्मकं जगत् तत्परं तदुत्तमम् । **अक्षरम्** । त्वमेवेत्यर्थः ॥३७॥

**त्वमादिदेवः[1] पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।**
**वेत्ताऽसि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥३८॥**

**(वि) अनन्तरूपम् अपरिच्छिन्नमेकरूपम् । नित्यरूपमिति वा । त्वया विश्वमिदं ततम् । 'नान्तं पश्यामि' इत्युक्तेपि नेश्वरस्य परिमाणानन्त्यं सिद्ध्यति । विद्यमानमप्यन्तं स्वयं न पश्यतीत्यपि प्रतीतेः तन्निवृत्त्यर्थं न केवलमहं न पश्यामि किन्तु त्वया ततं विश्वमित्युच्यते । अन्यत्तात्पर्यज्ञापनायाभ्यासरूपम् । तथाऽपि 'पश्यामि त्वां सर्वतो-ऽनन्तरूपम्', 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः' इत्यादिपुनरुक्तिरित्यत आह - अनन्तेति । एतद्वाक्यजातस्य विष्णोर्देशतःकालतो गुणतश्चानन्त्ये स्वस्य महत्तात्पर्यज्ञापनार्थेऽभ्यासरूपत्वान्न पुनरुक्तिदोष इति भावः ॥३८॥**

(रा) **निधानमाश्रयः** । **वेत्ताऽसि** वेदिताऽसि परिज्ञाताऽसि । **वेद्यं च त्वमेव** । **परंधाम** तेजोजातं च त्वमेव । **अनन्तरूप** । कालतोऽन्तहीनं रूपं यस्य तस्य सम्बुद्धिः । न च 'नान्तं न मध्यं न पुनस्तवादिं पश्यामि' इत्यनेन

---

१. 'आदिदेवः पुरन्दरः' विष्णुसहस्रनामसु ।

'त्वया ततम्' इत्यस्य पौनरुक्त्यं शङ्क्यम् । 'नान्तं पश्यामि' इत्युक्ते विद्यमानमप्यन्तं स्वयं न पश्यामीत्यपि प्रतीत्या परिमाणानन्त्यं नेश्वरस्य सिध्यतीत्यतो न केवलमहं न पश्यामि । **'त्वया ततं च विश्वम्'** इत्युक्तत्वेन सप्रयोजनत्वान्न पुनरुक्तिरिति ज्ञेयमिति । 'द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशाश्च सर्वाः' इति । 'त्वया ततं विश्वमनन्तरूप' इत्याद्यभ्यासो विष्णोर्देशकाल-गुणैरानन्त्ये स्वस्य महातात्पर्यज्ञापनार्थम् इति न पौनरुक्त्यं शङ्क्यम् ॥३८॥

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥३९॥**

(रा) गुणान्तरयुक्तत्वेन पुनः स्तौति - **वायुरिति** । **वायुर्**बलज्ञानरूपः । **यमः**[१] दोषोपरतिमान् । **अग्निः** स्वतो गतिहीनजगन्नेता । वृणुते भक्तानिति **वरुणः** । अतिसुखा ङ्कितत्वात् **शशाङ्कः** । प्रजापालनात् **प्रजापतिः** ॥३९॥

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।**
**अनन्तवीर्यामितविक्रम[२]स्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः[३] ॥४०॥**

**(वि) हे सर्व परिपूर्ण । अत एव तव कार्यकारणशब्दवाच्यत्वं युज्यते। 'सर्वं खल्विदं ब्रह्म[४]' इत्यादिश्रुतेः सर्वजगदात्मनस्तत्संनिधानत्वादिक-मयुक्तमित्याशङ्क्य श्रुतिगतसर्वशब्देन न सर्वात्मत्वमभिप्राय इत्याह -** सर्वमिति । **एवं यत्र यत्र परमात्मनो जीवजडैक्यमुच्यते तत्र तत्र सर्व-व्यापकत्वादिकमेव तादात्म्यव्यवहारालम्बनं न सर्वथैक्यमिति द्रष्टव्यम् ॥४०॥**

---

१. 'नियमो यमः' (वि.स.)
२. 'मुकुन्दोऽमितविक्रमः'; 'प्रद्युम्नोऽमितविक्रमः'(वि.स.)
३. सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः ।
न तु सर्वस्वरूपत्वात् सर्वभिन्नो यतो हरिः ॥ इति मात्स्ये । -भा.ता.
विशेषाभेदवचनं सन्निधानविशेषतः ।
सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेः ॥ इति भविष्यत्पर्वणि । - भा.ता.(४/८/४५)
४. छां ३-१४-१

**(रा)** सर्वतः दक्षिणोत्तरादिसर्वपार्श्वेभ्यः । नमोऽस्तु ते । हे सर्व परिपूर्ण ! ननु 'सर्वं खल्विदं ब्रह्म'[1] इति श्रुतौ, इदं सर्वं च जगद्ब्रह्मेति सर्वस्य जगतो ब्रह्मात्मकत्वोक्तेः 'त्वमस्य विश्वस्य परं निधानम् । त्वया ततमिदं विश्वम्' इत्याद्ययुक्तमित्यतः श्रुतिगतसर्वशब्दार्थमाह - **सर्वमिति । सर्वं** विश्वं **समाप्नोषि** व्याप्नोषि । यतः **ततः** [2]**सर्वोऽसि** । 'सर्वं खल्विदं ब्रह्म' 'पुरुष एवेदं सर्वम्' इत्यादि श्रुतिस्थसर्वशब्दवाच्योऽसि । इदं ब्रह्म सर्वं खलु सर्वजगद्व्यापि खल्वित्यादिरूपेण श्रुत्यर्थो ज्ञेयः । न तु जगदात्मकत्वेन इत्यभिप्रायः ॥४०॥

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ।**
**[3]अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वाऽपि ॥४१॥**

**(वि)** **एतादृशमाहात्म्यं भगवन्तं प्रति यदपराद्धं तत्क्षन्तव्यमित्याह** - सखेत्यादिना । हे **सखेति सन्धिः छान्दसः । तव महिमानम् इदं पूर्वोक्तं जगत्स्रष्टृत्वादिकम् । अजानता बलिष्टत्वाद्यल्पमहिमज्ञानेऽपीदृशं जगत्प्रभावादिमहामाहात्म्यमजानतेत्यर्थः ॥४१॥**

**(रा)** एतादृशमाहात्म्यं भगवन्तं प्रति यदपराद्धं तत्क्षन्तव्यमित्याह - **सखेत्यादिना** । इदं प्रागुक्तं जगत्स्रष्टृत्वादिकम् । **महिमानम्** । **अजानता मया** । **प्रमादात्** पारवश्यात् । **प्रणयेन वा** स्नेहेन वा । **सखेति मत्वा** । **हे कृष्ण हे यादव हे सखेति** । **प्रसभम्** अबहुमानम् । यथा तथा **यदुक्तं** तत् । क्षामये क्षमापये इत्यग्रेतनेनान्वयः । हे सख इति विच्छिद्य वक्तव्ये सन्धिश्छान्दसः ॥

---

१. छां ३-१४-१

२. 'सर्वः शर्वः शिवः स्थाणुः' (वि.स.);

३. 'अजानता महिमानं तवेदम्' इतिवत् स्वपूर्णतामापरोक्ष्येणानुभूयेदं पूर्णोऽस्मीति मन्यते ।
'कचित् तद्भावशेषः स्यात् क्रियाशेषः कचिद्भवेत् ।
कचित्पदार्थशेषः स्यादिदमादिस्त्रिधा स्मृतः ॥' इति शब्दनिर्णये ।
न हि राजा देवो वा सर्वजगद्भवति । राज्ञो भोगापेक्षया पूर्तिर्भवतीति देवदृष्टान्तः ।
प्रत्यक्षदर्शनार्थं राजदृष्टान्तः ॥ - बृ.भा.(६)

**यच्चापहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु[1] ।**
**[2]एकोऽथ वाऽप्यच्युत तत् समक्षं तत् क्षामये त्वामहमप्रमेयम्[3] ॥४२॥**

**(वि) एको मुख्यः । सर्वोत्तमोऽपि त्वमसत्कृतोऽसि । यत्सख्यादिना कृतं अथवा क्रीडादिसमयेऽपहासार्थं कृतम् । तत् अपराधजातम् । समक्षं तव पुरतः । क्षामये । अप्रमेयत्वाद्भवतो निन्दादिना हानिर्नास्ति, भक्तैः प्रमादादिना कृतमपराधं पुरतः प्रणामादिना क्षन्तुमर्हसीत्यर्थः ॥४२॥**

**(रा)** किंच अथवेति पक्षान्तरे । हे **अच्युत** सर्वगुणैश्च्युतिहीन । **विहारः** क्रीडा तदादिषु । **एकोऽपि** त्वं सर्वोत्तमोऽपि । असत्कारानर्होऽपि इति यावत् । **यदपहासार्थमसत्कृतोऽसि** अवमतोऽसि । **तत्** । **अप्रमेयम्** । **त्वाम्** । **समक्षं** त्वत्पुरतोऽहं क्षमापये क्षमस्वेति प्रार्थये । **एकशब्दे** ए शब्द एकवाची । क शब्दस्तु करोतेरन्तर्णीतण्यर्थात् केवलाद्वा डप्रत्यये क इति कर्तृवाची कारयितृ-वाची च । ए एकोऽसहाय एव कः कर्ता कारयिता चेत्येकः सर्वोत्तमः । अन्यनिरपेक्षकर्तृत्वादिमत एव सर्वोत्तमत्वादिति । अत्र एकशब्दः सर्वोत्तमपरो ध्येयः ॥४२॥

**पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥४३॥**

**(वि) एतदेव स्पष्टयति** - पितेत्यादिना ॥४३॥

**(रा)** असत्कारानर्हतामेव गुणान्तरोक्त्या व्यनक्ति - **पिताऽसीत्यादिना** । **त्वमस्य चराचरस्य लोकस्य पिताऽसि** जनकोऽसि । अत एव **पूज्यः** । **गरीयान्** [4]**गुरुः** । अत्यन्तं गुरुश्च । **अप्रतिमप्रभाव** अनुपमैश्वर्य ॥४३॥

---

१. 'पराभवो धर्षणः स्यादवज्ञानमथापि वा ।
न तत्सत्सु सदा कुर्यात् सह शय्यासनं न च ॥ इति षाड्गुण्ये । -भा.ता. (११/७/४५)
२. 'एको नैकः सवः कः किम्' (वि.स.);
३. 'अप्रमेयो हृषीकेशः' (वि.स.)
४. 'गुरुर्गुरुतमो धामः' (वि.स.)

**तस्मात् प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥४४॥**

**(रा)** यस्मादुक्तमहामहिमा **तस्मात्** । **कायं** भूमौ **प्रणिधाय** । **ईशमीड्यं** स्तुत्यम् । **त्वा त्वाम्** । **प्रणम्य** । **प्रसादये** । हे **देव** । **पित्रादिः पुत्रादे**-रिवापराधम् । **सोढुमर्हसि** ॥४४॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।**
**तदेव मे दर्शय देव रूपं प्रसीद[1] देवेश जगन्निवास ॥४५॥**

**(वि)** तदेव रूपं दर्शय ॥४५॥

**(रा)** एवं क्षमाप्य प्रार्थयते - **अदृष्टेति** । हे **देव** ! पूर्वमदृष्टमदृष्टपूर्वम् । तव **रूपं दृष्ट्वा** । **हृषितोऽस्मि** । तथा **भयेन च मे मनः प्रव्यथितं** प्रचलितम् । अतो हे **देवेश ! जगन्निवास** । **तदेव रूपं मे दर्शय प्रसीद** ॥४५॥

**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥४६॥**

**(वि)** 'तेनैव रूपेण भव' इति अनन्तरूपगोपनेन तदेव प्रकाशयेत्यर्थः ॥

**(रा)** तदेवेत्युक्तं रूपमाह - **किरीटिनमिति** । यथा विश्वरूपं दृष्टवानस्मि **तथैव तेनैव** पूर्वदृष्टेन **चतुर्भुजेन रूपेण त्वां द्रष्टुमिच्छामि** । हे **सहस्रबाहो** अनन्तबाहो । **विश्वमूर्ते** गुणपूर्णविग्रह इति वा । विश्वस्मिन् मूर्तिर्यस्येति वाऽर्थः ॥४६॥

**श्रीभगवानुवाच**

**मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं [2]विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥**

---

१. यथार्थज्ञानिनो नान्यः प्रियो विष्णोस्तु कश्चन ।
तथाऽप्यधिकसन्तुष्ट्यै प्रसीदेत्यर्थनं पुनः ॥ इति च । - भा.ता. (४/८/३८)

२. 'विश्वं विष्णुर्वषट्कारः' (वि.स.)

**(वि) भक्त्यतिशयोत्पादनाय विश्वरूपदर्शनस्य दौर्लभ्यं दर्शयन् भगवानुवाच - मयेत्यादिना । आत्मयोगात् स्वसामर्थ्यात् । विश्वं पूर्णगुणम्, 'विश्वनामा स भगवान् यतः पूर्णगुणः प्रभुः' इति वचनात्। अनन्तं देशकालापरिच्छिन्नम् । यन्मे रूपम् । त्वयैवेन्द्रशरीरेण दृष्टम् । त्वदन्येनाधमेन । त्वयैव वा । न दृष्टपूर्वम् । उक्तं च -**

**"विश्वरूपं प्रथमतो ब्रह्माऽपश्यच्चतुर्मुखः ।**
**तच्छतांशेन रुद्रस्तु तच्छतांशेन वासवः ।**
**यथेन्द्रेण पुरा दृष्टमपश्यत् सोऽर्जुनोऽपि सन् ।**
**तदन्ये क्रमयोगेन तच्छतांशांशदर्शिनः"[1] इति ॥४७॥**

(रा) भक्त्यतिशयोत्पादनाय विश्वरूपप्रदर्शनस्य दौर्लभ्यमाह - **मयेति** । हे **अर्जुन ! प्रसन्नेन मया** । **आत्मयोगात्** स्वरूपसामर्थ्यात् । **परम्** उत्तमम् । **इदं रूपं तव दर्शितम्** । तद्विशिनष्टि । **तेजोमयं** प्रचुरतेजस्स्वरूपम् । **विश्वं पूर्णम्। अनन्तं** देशकालापरिच्छिन्नम् । **आद्यम्** । **त्वदन्येन न दृष्टपूर्वम्** इत्यस्य त्वत्तोऽधमैरदृष्टपूर्वमित्यर्थः । तैरपि स्वयोग्यतानुरोधेन दृष्टत्वेऽपि अर्जुनवन्न दृष्टमित्यदृष्टत्वोक्तिः । तथा त्वया त्विन्द्रशरीरेण दृष्टपूर्वमित्यपि त्वदन्येनेति विशेषणाल्लभ्यते । **यन्मे रूपं दर्शितम्** इत्यन्वयः । अत्र विश्वरूपस्य **परम्** इत्युत्तमत्वोक्तिः अज्ञजनापेक्षयैव । ब्रह्मादीनां कृष्णाद्यवतारेष्वपि परत्वधीसत्वादिति ॥४७॥

**[2]न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥४८॥**

**(वि) ननु मदन्येनापि वेदादिसाधनैरपि तथा दृश्यतामित्यत आह - न वेदेति । वेदादिभिरपि त्वदवरेणैवं द्रष्टुमशक्यः । अन्यथा 'दृष्ट्वाऽद्भुतं रूपम्' इत्यादिविरोधः ॥४८॥**

---

१. ब्रह्माण्डवचनम् । - गी.ता.(११/४७)

२. 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥' -कठ. (२/६/९)

**(रा)** ननु अर्जुनादवरैः स्वतोऽर्जुनवन्न दृष्टमपि विश्वरूपं वेदादिसाधनैरर्जुनेनेव तदवरैरपि तथा दृश्यतामित्यत आह - **न वेदेति** । वेदानां यज्ञानां चाध्ययनैरग्निहोत्रादिक्रियाभिः । **उग्रैः** कृच्छ्रचान्द्रायणादितपोभिः । **एवंरूपः** । प्राक् प्रदर्शितविश्वरूपः । **अहम्** । **नृलोके** । **त्वदन्येन** त्वत्तोऽवरेण । त्वद्वद्द्रष्टुं **न शक्य** इत्यर्थः । सर्वात्मनाऽर्जुनादन्येनादृष्टार्थत्वे 'दृष्ट्वाऽद्भुतं रूपम्' इति प्रागुक्तविरोध इति ज्ञेयम् ॥४८॥

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥**

**(रा)** 'अदृष्टपूर्वम्' इत्यादिना प्रार्थितस्योत्तरमाह - **मा त इति** । घोरं संहर्तृरूपम् । **ईदृग्**ईदृशम् अनन्तबाह्वादिरूपम् । **दृष्ट्वा** । **ते व्यथा** । **मा**ऽस्तु । **विमूढभावो** विमूढत्वं च माऽस्तु । व्यपगतभयः **प्रीतमना**श्च सन् । **पुनस्त्वम्** । **तदेव रूपं** पूर्वदृष्टमेव **रूपम्** । **प्रपश्ये**ति ॥४९॥

**सञ्जय उवाच**

**इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥**

**(वि)** स्ववत् क्रियते प्रदर्श्यते इति स्वकं रूपम् । विश्वरूपमज्ञानां स्वरूपवन्न दर्शयति । एतज्ज्ञानामपि तथैव दर्शयतीति विशेषः । अन्यथा 'द्रष्टुमिच्छामि ते रूपम्' इति विरुद्धं स्यात् । उक्तं च -

'परापरविभेदस्तु मुग्धदृष्टिमपेक्ष्य तु ।
प्रादुर्भावं स्वरूपाणां विश्वरूपस्य च प्रभोः ।
अन्यथा न विशेषोऽस्ति व्यक्तिर्ह्यज्ञव्यपेक्षया ॥'[1] इति ॥५०॥

**(रा)** ततः किं जातमिति धार्तराष्ट्रहार्दं निरसितुं सञ्जय उवाच - **इत्यर्जुनम्** इत्यादिना । **इत्युक्त्वा** इत्यन्वयः । **तथा**शब्दः समुच्चये । **स्वकं रूपं दर्शया-**

---

१. गी.ता. उदाहृतप्रमाणवचनम् ।

**मास चेत्यर्थः** । स्वं स्वकीयतया प्रदर्शनीयमित्यर्थः । विश्वरूपं न स्वकीयं इदं तु स्वकीयमिति लोकभ्रान्तिविषयमिति यावत् । **भीतमेनम्** । **भूयः** । **आश्वासयामास च** । किं कृत्वा, **महात्मा सौम्यवपुर्भूत्वेति** ॥५०॥

**अर्जुन उवाच**

**दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥५१॥**

**(वि) किञ्चित् मनुष्यवद्दृश्यमानत्वात् मानुषं रूपम् । दृष्ट्वा । सचेताः प्रसन्नचित्तः । संवृत्तो जातः । अस्मि । प्रकृतिं पूर्वस्वभावं स्वस्थताम् । गतोऽस्मि ॥५१॥**

**(रा)** विश्वरूपतिरोधानेन कृष्णरूपदर्शनेनाश्वासितोऽस्मीत्याहार्जुनो **दृष्ट्वेति** । किंच मनुष्यवद्दृश्यमानत्वात् **मानुषम्** । **इदम्** । **सौम्यम्** अक्रूरम् । **इदं तव रूपम्** । **दृष्ट्वा** । **इदानीम्** । **सचेताः** प्रसन्नचित्तः । **संवृत्तो** जातः । **अस्मि** । **प्रकृतिं** पूर्वस्वभावं स्वस्थतां **गतोऽस्मी**त्युवाचेत्यन्वयः ॥५१॥

**श्रीभगवानुवाच**

**सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥५२॥**

**(वि) यन्मे रूपं दृष्टवानसि । अस्य रूपस्य नित्यं दर्शनकाङ्क्षिणो देवा अपि इदानीं दृष्टवन्तः । तदिदं सुदुर्दर्शमिति योजना ॥५२॥**

**(रा)** भयङ्करं रूपं किमर्थं दर्शितवानसीत्यतः विश्वरूपदृष्टेर्महिमानमाह भगवान् - **सुदुर्दर्शमिति** । **यन्मम रूपं दृष्टवानसि** । **अस्य रूपस्य** । **नित्यं दर्शनकाङ्क्षिणो** ये **देवाः** । तेऽपि यद्दृष्टवन्तस्तदिदं **सुदुर्दर्शम्** । केषाञ्चित् सुखेन दर्शनीयम् । केषाञ्चित् सुखेन दुःखेन च दर्शनीयमित्यर्थः । देवानामप्यपेक्षितत्वात् तव शत्रुवधे निमित्तमात्रत्वज्ञापनाय चैतद्रूपं दर्शितमिति भावः ॥५२॥

**नाहं वेदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥**

(वि) न वेदयज्ञादिना उक्तमर्थं स्पष्टयति - नाहमिति ॥५३ ॥

(रा) किंचातिदुर्लभदर्शनं ते मया कारितमिति भावेनाह - **नाहमिति** । **यथा दृष्टवानसि** । **एवंविधो** विश्वरूपवानित्यर्थः ॥५३॥

**भक्त्या [१]त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥५४॥**

(वि) वेदादीनां मुख्योपायत्वाभावात् कस्तर्हि वेदादिसाध्यो मुख्योपाय इत्यत आह - भक्त्येति । तत्त्वेन ज्ञातुं द्रष्टुं साक्षात्कर्तुं [२]प्रवेष्टुं सायुज्यं प्राप्तुम् । अनन्यया असहायया भक्त्यैव शक्यः ॥५४॥

(रा) केनोपायेन द्रष्टुं शक्य इत्यत आह - [३]**भक्त्येति** । वेदादितो विशेषद्योतकस्तुशब्दः । **अनन्यया**ऽन्यासाधारणया असहाययेति वा । **तत्त्वेन ज्ञातुं द्रष्टुं प्रवेष्टुं** सायुज्यं प्राप्तुं **च शक्यो**ऽहमिति ॥५४॥

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥५५॥**

**॥ इति श्रीमद्भगवद्गीतायामेकादशोऽध्यायः ॥**

---

१. यादृशी मयि भक्तिः स्यात् तादृश्यन्यत्र नैव चेत् ।
अनन्यभक्तिरुद्रेकात् सा ययैव तरेत् सृतिम् ॥ इति च । - भा.ता. (३/२६/२२)

२. 'यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व' इति तैत्तिरीय (३)।

३. माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
स्नेहो भक्तिरिति प्रोक्ता तया मुक्तिर्न चान्यथा ॥ - म.भा.ता.नि. (१/८५)

परमेश्वरभक्तिर्नाम निरवधिकानन्तकल्याणगुणात्मकः स्वात्मात्मीयसमस्तवस्तुभ्योऽनेक- गुणाधिकोऽन्तरायसहस्रेणाप्यप्रतिबद्धनिरन्तरप्रेमप्रवाहः ॥ - न्यायसुधा

**(वि) एतदेव भक्तिस्वरूपं दर्शयन्नाह - मत्कर्मकृदिति ॥५५॥**

॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीविद्याधिराजकृतायाम् एकादशोऽध्यायः ॥ ११॥

**(रा)** अनन्ययेत्युक्त्या जातान्यत्यागभ्रान्तिं निराह - **मत्कर्मकृदिति ।** अहमेव परमो यस्य स तथा । मदुत्तमताज्ञानवानित्यर्थः । **सङ्गवर्जितः** फलस्नेहहीनः । **यः सः । मामेतीति** ॥५५॥

॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते एकादशोऽध्यायः ॥



# [१]द्वादशोऽध्यायः

**अर्जुन उवाच**

**एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥**

**(वि) अस्मिन्नध्याये भगवदव्यक्तोपासनयोर्मध्ये भगवदुपासनाधिक्यं निर्णीयते । 'अन्तवत् तु फलं तेषाम्' इति ब्रह्माद्युपासकानामन्तवत्फलवत्वस्योक्तत्वात् तेभ्यो भगवदुपासकानामुत्तमत्वं निर्णीतम् । लक्ष्म्यास्तु 'चतुष्कपर्दा युवतिः सुपेशा[२]', 'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः[३]', 'त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया[४]' इत्यादिश्रुतिषु महामहिमत्वेन प्रसिद्धाया उपासनं 'श्रियं वसाना अमृतत्वमायन्[५]' इत्यादौ मोक्षसाधनत्वं श्रूयते । अतो मार्गद्वयेनैकमेव फलं प्राप्नुवतां मध्ये के श्रेष्ठा इति विशेषादर्शनात् कस्यचित् संशयः स्यात्। तदनुग्रहार्थं सूक्ष्मयुक्तिज्ञानार्थं च भगवदुपासकानामुत्तमत्वं जानन्नप्यर्जुन उवाच - एवमिति । एवं दृष्टश्रुतरूपम् । त्वाम् । ये भक्ताः। सततमुद्युक्ताः। एवं 'मत्कर्मकृत्' इत्याद्युक्तप्रकारेणोपासते । येचाप्यक्षरमव्यक्तं चित्प्रकृतिमुपासते । तेषां मध्ये के । योगवित्तमाः अतिशयेनोपायविदः । यद्यप्यव्यक्तादिशब्दाः भगवद्वाचकाः 'अव्यक्तोऽक्षरः' इत्युक्तत्वात् । तथापि भगवत्प्रतियोगित्वेनोक्तत्वात् परब्रह्मणश्च भगवतोऽन्यस्याभावादत्र चित्प्रकृतिवाचिन एव । तथा 'कूटस्थोऽक्षर उच्यते' इत्यत्रापि**

---

१. अव्यक्तोपासनाद् भगवदुपासनस्योत्तमत्वं प्रदर्श्य तदुपायं प्रदर्शयत्यस्मिन्नध्याये-गी.भा.
साधननिर्णयोऽत्र। -गी.ता.

२. गी.भा. उदाहृतप्रमाणवचनम् ।

३. गी.भा. उदाहृतप्रमाणवचनम् ।

४. गी.भा. उदाहृतप्रमाणवचनम् ।

५. गी.ता. उदाहृतप्रमाणवचनम् ।

**अक्षरादन्यस्योत्तमत्वाभिधानात् अव्यक्ताक्षरादिशब्दाः पुराणादिषु चित्प्रकृतावपि प्रसिद्धाः ॥१॥**

**(रा)** देवदेव्युपासनयोर्मध्ये देवोपासनस्याधिक्याय तदुपासनमाह अस्मिन्नध्याये । भगवदुपास्त्याधिक्यपरत्वादस्य भगवन्माहात्म्यपरषट्कान्तर्भावश्च । 'तमेवं विद्वान्[1]' इत्यादौ भगवदुपास्तेरिव 'श्रियं वसाना अमृतत्वमायन्' इत्यादि श्रुतौ श्रियं प्रत्युपासीना अमृतत्वं प्राप्ताः' इति श्रीदेव्युपास्तेरपि मुक्तिहेतुत्वावगमेन जायमानपरकीयसन्देहमाहृत्य विशेषयुक्तिबुभुत्सया पृच्छति - **एवमिति** । न च देव्युपास्तेर्मुक्तिहेतुत्वमुपचरितम् । 'अन्तवत् तु फलं तेषाम्' इति साप्तमिकन्यायात् । अतो नास्य सन्देहहेतुत्वमिति शङ्क्यम् । ब्रह्मादिदेवानां जनिमृतिमत्त्वेन तदुपास्तेरन्तवत्फलकत्वेऽपि श्रियस्तु 'चतुष्कपर्दा' इत्यादौ नित्ययौवनज्ञानमयत्वदेवपूज्यत्वादिमहामहिम्नः श्रवणेन तदुपास्तेर्मुक्तिहेतुत्वसम्भवेन सन्देहहेतुत्वं मन्वानस्यायं प्रश्नः । **ये भक्ताः सततयुक्ताः** सततं ध्यानकर्मयोगवन्तः । **एवं** दृष्टश्रुतरूपं **त्वां**, एवं 'मत्कर्मकृत्' इत्याद्युक्तप्रकारेण **पर्युपासते** । **येऽपि चाक्षरनामकमव्यक्तं** चित्प्रकृतिं परिश्रद्धया भक्त्यादिपूर्वकमुपासते । **तेषां** मध्ये । **के योगवित्तमाः** मोक्षोपायज्ञेषु श्रेष्ठाः इत्युवाचार्जुनः इत्यन्वयः । एवमित्यस्य त्वामित्यत्रोपासत इत्यत्र चान्वयः । 'एवम्' इत्यस्य पूर्वपरामर्शित्वात् पूर्वानन्तर्यमप्यस्याध्यायस्य ध्येयम् । अत्राव्यक्तमित्येव वाच्ये अक्षरमिति तद्विशेषेणोक्तिः क्षरणवद्भ्यो ब्रह्मादिदेवान्तरेभ्यो वैलक्षण्यप्रदर्शनेन प्रश्नसम्भावनार्था ॥१॥

**श्रीभगवानुवाच**

**मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥**

**(वि) अव्यक्तोपासकेभ्यो मदुपासका एवोत्तमा इत्युत्तरं भगवानुवाच - मयीति । ये मयि मन आवेश्य । नित्ययुक्ताः सततोद्योगिनः । परया**

---

१. तै.आ. ३-१२-७

**श्रद्धया । आधिक्येनोपेता युक्ता मामुपासते । ते युक्ततमाः साधकोत्तमाः। मताः ॥२॥**

**(रा)** अव्यक्तोपासकेभ्यो मदुपासका एवोत्तमा इत्याह - **मयीति** । **ये मयि** सम्यक् **मन आवेश्य** । **नित्ययुक्ताः** नित्यं कर्मयोगध्यानयोगवत्त्वेन नित्ययुक्ताः । **परया श्रद्धयोपेताश्च** सन्तः । **मामुपासते** । **ते युक्ततमाः** मोक्षोपायवत्सु श्रेष्ठाः । **मे मताः** । इत्यर्थः ॥२॥

**ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥३॥**

**(वि) ननु त्वदुपासकानां मोक्षफलवत्वेनोत्तमत्वे, अधमत्वादव्यक्तोपासकानां मोक्षफलगामित्वं न स्यात्, ततश्च श्रुतिविरोधः, इत्यत आह -** ये त्विति । **अक्षरम् अविनाशि । सूक्ष्मत्वादनिर्देश्यम् । अप्रसिद्धत्वात् सर्वजगदुपादानप्रकृत्यभिमानित्वाच्चाव्यक्तम् । लक्ष्म्या नामैतत् । इतरत् विशेषणम् । सर्वत्रगम् । देशतो व्याप्तम् । गुणबाहुल्यादचिन्त्यम् -**

**'सूक्ष्मत्वादप्रसिद्धत्वाद्गुणबाहुल्यतस्तथा ।**
**अनिर्देश्यौ तथाऽव्यक्तावचिन्त्यौ श्रीश्च माधवः ॥'[1]**

**इति वचनात् । कूटे आकाशे अभिमानित्वेन स्थितं कूटस्थम् । 'आकाशे संस्थिता त्वेषा ततः कूटस्थिता मता'[2] इत्युक्तेः । अचलं कदापि स्वपदादभ्रष्टम् । 'न चलेत् स्वात् पदाद्यस्मादचला श्रीस्ततो मता'[3] इति वचनात् । ध्रुवं निर्विकारम् ॥३॥**

**(रा)** नन्वव्यक्तोपासकानां मोक्षाभावे 'श्रियं वसाना अमृतत्वमायन्' इत्यादि श्रुतिविरोधः । मोक्षसत्वे च कथं त्वदुपासकानामेव युक्ततमत्वं फलसाम्यादित्यत आह - **ये त्विति** । यद्वा - उक्तश्रुत्यादिनाऽव्यक्तोपासकानां मत्प्राप्तिरूपमोक्षसत्वेऽपि तदुपासनं कष्टसाध्यम् । मदुपासनं न तथा । अतो मदुपासका एवोत्तमा

---

१. नारदीयवचनम् - गी.ता.
२. ऋग्वेदखिलवचनम् । - गी.भा.; ३. आग्नेयवचनम् - गी.ता.

इत्याह - **ये तु** इत्यादिना श्लोकपञ्चकेन । **अक्षरम**विनाशि । सूक्ष्मत्वात् **अनिर्देश्यम्** । अप्रसिद्धत्वात् जगदुपादानप्रकृत्यभिमानित्वाच्चाव्यक्तनामकं श्रीतत्त्वम् । **पर्युपासते** । विष्णुभक्तिविष्णूत्तमत्वज्ञानविष्णूपासनादिपूर्वकमुपासते । तद्विशिनष्टि - **सर्वत्रगमिति** । देशतो व्याप्तम् । गुणबाहुल्याद**चिन्त्यम्** । **कूटस्थं** कूटेऽव्याकृताकाशे अभिमानितया स्थितम् । कदाऽपि स्वपदादभ्रष्टत्वादचलम् । ध्रुवं निर्विकारमिति ॥३॥

**सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥**

**(वि) ये त्विन्द्रियाणां ग्रामं समूहम् । सम्यक् नियम्य । सर्वत्र समबुद्धयः षष्ठोक्तप्रकारेण जीवचिदादिसम्यग्ज्ञानवन्तः । भगवद्विरोधिसर्वभूतहिते रताः सन्तः । अक्षरत्वादिविशेषणविशिष्टं मोक्षदानसामर्थ्ययुक्तमव्यक्तम् । परितः सदाचारविष्णुभक्त्यादिसाधनसम्पत्त्या । उपासते । ते । मामेव प्राप्नुवन्ति ॥४॥**

**(रा)** तदुपासनायामितिकर्तव्यतामाह - **सन्नियम्येति** । **इन्द्रियग्रामम्** इन्द्रियसमुदायम् । **सन्नियम्य** विषयेभ्य उपसंहृत्य । **सर्वत्र समबुद्धयः** । षष्ठाध्यायोक्तदिशा सम्यग्ज्ञानवन्तः । **सर्वभूतहिते रताश्च** सन्तः । **पर्युपासत** इत्यन्वयः । अत्र अक्षरत्वादिविशेषणं मोक्षदानशक्तिद्योतनाय । **ते मामेव** । **प्राप्नुवन्ती**ति ॥४॥

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्**[1] **।**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥**

**(वि) कथं तर्हि त्वदुपासकानामुत्तमत्वमित्यत आह - क्लेश इति । केवले अव्यक्ते आसक्तचित्तानाम् । क्लेशोऽधिकतरः । कथं गम्यत इति**

---

१. ‘ये तु विष्णुमवज्ञाय श्रियमेव ह्युपासते ।
उपेक्ष्य वा हरिं ते तु भूत्वा याज्याः पतन्त्यधः ॥’
इति प्रवृत्तसंहितायाम् । -भा.ता.(११/५/१०)

**गतिर्मार्गः। अव्यक्तोपासनद्वारको मत्प्राप्तिमार्गो दुःखं यथा तथाऽवाप्यते। हि । पृथगव्यक्तोपासने । उक्तप्रकारेण पर्युपासनमिन्द्रियग्रामातिनियमनं सर्वत्र समबुद्धित्वं सर्वभूतहितेरतत्वादिसुष्ठ्वाचारमन्तरेणाव्यक्तप्रसादो न भवति । किञ्चिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह निरन्तरं भगवदुपासनं कर्तव्यम् । ततो मुक्तिरिति चिरेणैव भवतीति क्लिष्टोऽयं मार्गः ।।**

**(रा)** अव्यक्तोपासकानामपि त्वत्प्राप्तिरूपमोक्षसत्वे कथं त्वदुपासकानां उत्तमतेत्यत आह - **क्लेश इति** । अव्यक्ते विष्णुं विनाकृतश्रीतत्त्वे । आसक्तचित्तानां तेषाम् । **क्लेशः अधिकतरः** अत्यन्ताधिकः । कथमित्यत आह - **अव्यक्ता हीति** । गतिशब्दो गम्यतेऽनेनेति करणव्युत्पत्त्या मार्गपरः । अव्यक्तशब्दस्तदुपासनं लक्षयित्वा तद्वारकलक्षकः । अव्यक्तोपासनद्वारको भगवत्प्राप्तिमार्गः दुःखं यथा भवति तथा देहवद्भिरवाप्यते हि । प्रागुक्तपरिशब्दार्थपूर्वकमुपासनम्, इन्द्रियग्रामातिनियमनम्, षष्ठोक्तप्रकारेण सर्वत्र समबुद्धित्वम्, सर्वभूतहितकरत्वम्, सुष्ठ्वाचारं च विना न देवीप्रसादः । तेन विना नेश्वरप्रसादः । तेन विना न तत्प्राप्तिरिति तदुपास्तिद्वारकभगवत्प्राप्तिमार्गस्य क्लेशतरत्वं ध्येयम् ।।५।।

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ।।६।।**

**(वि) श्रीपतित्वेन भगवदुपासने परमश्रद्धामात्रयुक्तानां सुष्ठ्वाचारादेरूनत्वेऽपि श्रीपतिप्रसादसम्भवादचिरान्मोक्षो भवतीति सुगमोऽयं पन्थाः, इत्याह - ये तु इत्यादिना । ये त्वनन्येनैव योगेन -**

**'विष्णोरन्यन्न स्मरेद्यो विना तत्परिवारताम् ।**
**तदधीनतां वाऽनन्ययोगी स परिकीर्तितः ।।[१]'**

---

१. गी.ता. उदाहृतप्रमाणवचनम् ।

**इत्युक्तरीत्या लक्ष्म्यादीनां परिवारत्वादिना[1] तत्साहित्यलक्षणेन न तु पृथक्त्वेन मामुपासते ॥६॥**

(रा) मदुपासने न तथा क्लेश इत्याह - **ये त्विति** । पूर्वस्माद्वैलक्षण्यद्योतकस्तुशब्दः । **ये तु । सर्वाणि कर्माणि । मयि । सन्न्यस्य** सर्वस्वतन्त्रो हरिरेव मयि स्थित्वा स्वपूजात्वेन कर्माणि स्वाधीनकर्त्रा मया कारयतीत्यनुसन्धाय समर्प्यैति वा । **मत्पराः** अहमेवोत्तम इति जानन्तः । **अनन्येनैव योगेन** अव्यक्तोपासनां विना कृतेन ध्यानेन केवलमद्विषयध्यानेनापीति यावत् । **मां ध्यायन्तः । उपासते** । अत्र उपासत इत्युक्त्या पर्युपासत इत्युक्ताव्यक्तोपासनमिव नातिशयितोपासनम् । अतीवेन्द्रियनियमनादिकं मत्प्रसादे नापेक्षितमिति न क्लेश इति सूचितम् । तथा, 'न चिरात्' इत्यनेनाव्यक्तापरोक्षे यावान् प्रयासस्तावता यदि मामुपासते तदूनेन वा तदा मदपरोक्षमेव भवतीत्यतोऽपि न क्लेश इति सूचितम् । 'तेषामहं समुद्धर्ता भवामि' इत्यनेनेन्द्रियसंयमाद्यूनभावेऽपि देवीवद्देवो नोपेक्षते, किन्तु तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददातीति चातिसौकर्यं भक्तानां भगवदुपासने इति भावः ।

यद्वा - 'क्लेशोऽधिकतर' इति श्लोके अव्यक्तोपास्तिमार्गस्य क्लेशातरत्वोक्त्यैव सुष्ट्वाचारादेरूनत्वेऽपि मत्प्रसादो भवत्येवेत्यक्लेशत्वात्, मदुपास्तिमार्ग एव श्रेष्ठ इति तात्पर्यगत्योक्तप्रायत्वात्, हेत्वन्तरेणापि भगवदुपास्तिमार्गः श्रेष्ठ इत्याह - **ये त्विति** । पूर्वार्धस्य प्रागिवार्थः । अनन्येनैव अन्यशब्दो लक्ष्म्याद्यन्यदेवतावाची सन् तन्निष्ठस्वातन्त्र्यपरिवारत्वविषयपरः, स न भवतीत्यन्यः, तेन योगेन, ध्यानेन । भगवदधीनतया तत्परिवारत्वेन लक्ष्मीब्रह्मादिसहितेन ध्यानयोगेनेति यावत् । 'ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ[2]' इत्यादि सूत्रात् । **मां ध्यायन्त उपासते** ॥६॥

**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥७॥**

---

१. रमाब्रह्मादयस्तस्य परिवारतयैव तु । इति सदाचारस्मृतिः ।
परिवारतया ग्राह्या अपि हेयाः प्रधानतः ॥ - इत्यनुव्याख्यानम् ।

२. ब्र.सू. (३-३-५७)

(वि) तेषां मृत्युरूपात् संसारात् । न चिराच्छीघ्रमुद्धर्त्ताऽस्मि । उक्तं च -

'अविष्णुज्ञैरतद्भक्तैस्तदुपासाविवर्जितैः ।
शपेदुपासिताऽप्येषा श्रीस्तांस्तद्धरितत्ववित् ॥
मद्भक्तस्तमुपास्यैव श्रियं ध्यायीत नित्यदा ।
तेन तुष्टा तु साऽच्छिद्रं दद्याद्विष्णोरुपासनम् ॥
ततस्तद्दर्शनान्मुक्तिं यात्यसौ नात्र संशयः ।
तथाऽपि सर्वपरमां सर्वदोषविवर्जिताम् ॥
ज्ञात्वा श्रियं तत्परमं तत्पतिं पुरुषोत्तमम् ।
विज्ञायोपासते नित्यं ते हि युक्ततमा मताः ॥
यतः क्लेशोऽधिकस्तेषां पृथक् श्रियमुपासताम् ।
विष्णुना सहिता ध्याता साऽपि तुष्टिं परां व्रजेत् ॥
अन्यथा तु पुनर्विष्णोः श्रीपतित्वेन चिन्तनम् ।
अच्छिद्रमेव कर्तव्यमिति मुक्तिश्चिराद्भवेत् ।
तस्मादक्लेशतो मुक्तिः क्षिप्रं विष्णुमुपासताम् ॥'[1] इति ॥७॥

(रा) तेषां मय्यावेशितचेतसाम् । अहम् । मृत्युसंसारसागरात् मृत्युरूपसंसारसमुद्रात् । न चिरात् शीघ्रम् । समुद्धर्ता भवामीत्यर्थः । अत्र न चिरादित्युक्त्या श्रिया सह भगवदुपासने द्वयोरपि परमप्रसादसम्भवेन अचिरान्मोक्षो भवति । पृथगव्यक्तोपासनपक्षे तु पूर्वं किञ्चिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह भगवदुपासनं तु निरन्तरं कार्यम् , ततो मुक्तिरिति चिरेणैव भवतीत्यतोऽचिरेण मुक्तिहेतुत्वाच्च भगवदुपासनमेवाधिकमित्युक्तं भवति । तदुक्तम् - 'विष्णुना सहिता ध्याता साऽपि तुष्टिं परां व्रजेत्' इत्यादि ॥७॥

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥८॥**

---

१. परमश्रुतिवचनम् - गी.ता.

**(वि) भगवदुपासनस्योत्तमत्वमभिधायोत्तमत्वादेव कुरु । तदलाभे तत्सिद्ध्यर्थमुपायान्तराणि सम्पादयेत्याह** - मयीत्यादीना । **मय्येव मन आधत्स्व । मामेवोपास्व । बुद्धिं मयि निवेशय । मां जानीहि । अत ऊर्ध्वम्, एतत्सम्पत्त्यनन्तरम् । मय्येव निवसिष्यसि । निर्दुःखानन्दात्मिकां स्थितिं प्राप्स्यसि ॥८॥**

**(रा)** एवमुक्तदिशा भगवदुपास्तेरेवोत्तमत्वात्, तदेव कुरु । तदशक्तौ तत्सिद्ध्यर्थम् उपायान्तराणि सम्पादयेत्याह - **मयि** इत्यादि चतुष्टयेन । **मय्येव मन आधत्स्व** आधेहि । मामुपास्वेति यावत् । तदलाभे, **मयि बुद्धिं निवेशय** । मद्विषयं ज्ञानं सम्पादय । अत ऊर्ध्वम्, मत्सम्पत्त्यनन्तरम् । **मय्येव निवसिष्यसि** । निर्दुःखानन्दानुभवात्मिकां स्थितिं प्राप्स्यसि ॥८॥

**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय ॥९॥**

**(वि) अथ मयि स्थिरं चित्तं समाधातुं न शक्नोषि, ततोऽभ्यासयोगेन मामाप्तुमिच्छ ॥९॥**

**(रा)** अथेत्यर्थान्तरे । **स्थिरं** यथा तथा । **मयि चित्तं समाधातुं न शक्नोषि** । **ततो** मनःसमाधानाशक्तत्वात् । पुनः पुनः प्रत्याहारेण भगवन्मनः-समाधानरूपाभ्यासलक्षणोपायेन । **मामाप्तुं** ज्ञातुम् **इच्छ** ॥९॥

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।**
**मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥१०॥**

**(वि) अभ्यासेऽप्यसमर्थश्चेदसि । ततः सर्वकर्माणि मद्विषयाणि कुर्वन् । मत्कर्मपरमो भव । सिद्धिं मोक्षम् ॥१०॥**

**(रा) अभ्यासेऽप्यशक्तोऽसि** । तदा **मत्कर्मपरमः** मत्प्रीत्यर्थं मद्विषयकर्मा-नुष्ठानमेव परममुत्तमं यस्य स तथा तादृशः । **भव** । तावता कथमिष्टसिद्धिरित्यत आह - **मदर्थमिति** । **कुर्वन्नपीत्यर्थः** ॥१०॥

**अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।**
**सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥**

(वि) अथैतदपि कर्तुमशक्तोऽसि तर्हि, अन्यदेवादिपूजनं कृत्वाऽन्ते मत्समर्पणलक्षणं योगमात्रमाश्रितः । यतात्मवान् शुद्धचित्तः । सर्वकर्मफलत्यागं कुरु । उक्तं च -

"वैष्णवान्येव कर्माणि यः करोति सदा नरः ।
जपार्चामार्जनादीनि स्वाश्रमोक्तानि यानि च ।
स तत्कर्मेति विज्ञेयो योऽन्येदेवादिपूजनम् ।
कृत्वा हरावर्पयति स तु तद्योगमात्रवान् ॥"[1] इत्यादि ॥११॥

(रा) अथेति प्राग्वत् । एतदपि सर्वाण्यपि जपार्चनादीनि कर्माणि मदुद्देश्यकानि मत्प्रीत्यर्थकानीत्यनुष्ठानमपि **कर्तुमशक्तोऽसि** । तर्हि देवतान्तरोद्देशेन कर्माणि कृत्वाऽन्ते मयि समर्पणरूपं मद्योगम् । मत्कर्मवत्वे उपायम् अन्ते मयि समर्पणम् । सर्वकर्मणां वैष्णवत्वेन करणे य उपायस्तमाश्रितो भव । ततो मद्योगात् । यतात्मवान् नियतमनस्कः । **सर्वकर्मफलत्यागं** कुर्वित्यर्थः । सर्वप्रकारेणापि मदुपासनमेव त्वदुपलक्षितैः सर्वैः कार्यमिति तात्पर्यार्थः ॥११॥

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं[2] विशिष्यते ।**
**ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥**

**(वि) ध्यानालाभे ज्ञानम्, तदलाभेऽभ्यासः, इत्येतत् समर्थयते श्रेयो हीति । अभ्यासादज्ञानपूर्वाज्ज्ञानमेव श्रेयः, ज्ञानमात्रात्सज्ञानं ध्यानं विशिष्यते, तस्मात् ध्यानात् कर्मफलत्यागः । ज्ञानपूर्वं ध्यानेऽपि सकामान्निष्काममेव**

---

१. गी.ता. उदाहृतप्रमाणवचनम् ।

२. ये भक्त्या विवशा विष्णोर्नाममात्रैकजल्पकाः ।
तेऽपि मुक्तिं व्रजन्त्याशु किमु तद्ध्यायिनः सदा ॥ इति व्योमसंहितायाम् ।
-भा.ता. (३/१०/१५)

**ध्यानमधिकमिति यावत् । त्यागात् फलत्यागोपलक्षितनिष्काम-ध्यानादनन्तरम् । ज्ञानमात्रव्यवधानेन शान्तिर्मुक्तिर्भविष्यति । तदुक्तम्-**

**"असम्यक्ज्ञानिनो ध्यानाज्ज्ञानमेव विशिष्यते ।**
**ज्ञात्वा ध्यानं ततस्तस्मात् तत्फलेच्छाविवर्जितम् ।**
**तस्माज्ज्ञानाद्भवेन्मुक्तिस्त्यागाद्ध्यानयुतात् स्फुटम् ॥"[1] इति ॥१२॥**

**(रा)** 'मयि' इत्यादिनोक्तध्यानालाभे ज्ञानं तदलाभेऽभ्यासयोग इत्येतत् समर्थयते - **श्रेयो हीति** । अज्ञानपूर्वकादभ्यासाज्ज्ञानं श्रेयः । ज्ञानमात्राज्ज्ञान-पूर्वकध्यानं **श्रेयः** । तस्माद्ध्यानात् ज्ञानपूर्वकसकामध्यानादित्यर्थः । **कर्मफल-त्यागः** श्रेयान् । एतादृशसकामध्यानात् कर्मफलत्यागोपलक्षिततादृशनिष्काम-ध्यानं श्रेय इति योज्यम् । **फलत्यागात्** कर्मफल त्यागोपलक्षित-निष्कामध्यानादित्यर्थः । अपरोक्षज्ञानं श्रेय इति योज्यम् । **अनन्तरं शान्तिः** मोक्ष इत्यर्थः ॥१२॥

**अद्वेष्टा सर्वभूतानां मैत्रः[2] करुण एव च ।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥१३॥**

**(वि)** 'ये तु सर्वाणि कर्माणि' इत्यादिनोक्तं प्रपञ्चयति - अद्वेष्टेत्यादिना । **मैत्रः समेषु सत्सु स्नेहवान् । करुणः अधमेषु सत्सु कृपावान् ॥१३॥**

**(रा)** 'ये तु सर्वाणि कर्माणि' इत्युक्तम्, तदुपलक्षितधर्मान्तरोक्त्या प्रपञ्चयति - **अद्वेष्टेत्यादिना । अद्वेष्टा** अप्रियमकुर्वन् । क्लेशस्थानं निरूप्य ततो रक्षिता **मैत्रः**। **करुणः** कृपावान् । **निर्ममः** ममेदमिति स्वातन्त्र्यबुद्धिहीनः । **निरहङ्कारः** अविद्य मानात्मगुणाभिमानमोहहीनः । हेयतया दुःखसमं वैषयिकसुखं यस्य स **समदुःखसुखः** । **क्षमी** सहिष्णुः ॥१३॥

---

१. गी.ता. उदाहृतप्रमाणवचनम् ।

२. गायत्रीजपपरायणः - 'कुर्यादन्यन्न वा कुर्यात् मैत्रो ब्राह्मण उच्यते ।' इत्युक्तेः ।

**सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥१४॥**

**(वि) यदृच्छालब्धेन सन्तुष्टः ॥१४॥**

**(रा) सन्तुष्टः** अलम्बुद्धिमान् । **योगी** कर्मध्यानरूपज्ञानोपायवान् । **यतात्मा** विषयेभ्य उपसंहृतचित्तः । **दृढनिश्चयः** अप्रामाण्यशङ्काशून्यतत्त्वनिश्चयवान् । मय्यर्पिते मनोबुद्धी यस्य स तथोक्तः ॥१४॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥१५॥**

**(वि) नोद्विजते न बिभेति स चेति । चशब्दाद्भक्त इत्यनुकृष्यते ॥१५॥**

**(रा)** किंच, **यस्माल्लोको नोद्विजते** न बिभेति, लोकस्य भयहेतुर्यो न भवति । यश्च सर्वमीशाधीनं बुद्ध्वा **लोकाज्जनान्नोद्विजते । यश्च हर्षामर्ष-भयोद्वेगैः** । हर्षो नाम मदादधर्माय मनःप्रवृत्तिः अमर्षो रोषः । उद्वेगो मनः-कम्पविशेषः । तैर्मुक्तो हीनः । **स** चेत्यत्र भक्त इत्यनुपज्यते । **मे प्रियः** ॥१५

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥१६॥**

**(वि) शुचिर्बाह्यान्तरशुद्धिमान् । दक्षः पटुः । उदासीनः सर्वत्र समः। सर्वारम्भपरित्यागीति सर्वारम्भाभिमानत्यागेन फलत्यागेन भगवति समर्पणरूपेण च त्यागी । तस्यैव प्रपञ्चः - शुभाशुभपरि-त्यागीति । भक्त्यादिव्यतिरेकेणेतराकाङ्क्षारहितः । उक्तं च -**
**'भक्तिं ज्ञानं च वैराग्यमृते यो नेच्छति क्वचित् ।**
**शुभाशुभपरित्यागी विद्वद्भिः कीर्तितो हि सः ॥'[1] इति वचनात् ॥१६॥**

---

१. शब्दनिर्णयवचनम् - गी.ता.

**(रा)** किंच **अनपेक्षो**[1] भगवत्प्रीत्यन्यत्र क्वाप्यपेक्षाहीनः । **शुचिः** बाह्यान्तर-शुद्धिमान् । **दक्षः** भगवत्कर्मकरणे पटुः । **उदासीनः** कर्तव्योपकारापकारयो-रुपेक्षकः । **गतव्यथः** परकृतापकारैरप्राप्तमनःक्लेशः । **सर्वारम्भपरित्यागीत्यस्य** अ वैष्णवसर्वारम्भपरित्यागीति सर्वारम्भाभिमानत्यागी सर्वारम्भफलत्यागी भगवति सर्वारम्भसमर्पणरूपत्यागवानिति चतुर्धाऽर्थः ॥१६॥

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।**
**शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥ १७ ॥**

**(वि) 'हर्षादिभिर्मुक्तः' इत्युक्ते कादाचित्कमपि भवतीति, 'यो न हृष्यति' इत्यादि, 'हर्षामर्ष...' इत्यादिकमुपचारपरिहारार्थम् । उक्तं च - '(हृ)धृतिर्मदादधर्माय हर्षो नाम प्रकीर्तितः[2]' इत्यभिधानात् ॥१७॥**

**(रा)** 'हर्पामर्षभयोद्वेगैर्मुक्तः' इत्युक्ते निष्ठाप्रत्ययेनातीतत्वप्रतीत्या कालान्तरे हर्पादिमानिति शङ्का स्यात् । तन्निरासाय तद्व्यनक्ति **यो न हृष्यतीत्यादिना** । 'नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः'[3] इति सूत्रेण क्रियासातत्यरूपक्रियाप्रबन्धे विहितलट्प्रत्ययान्तत्वेन **'हृष्यति'** इत्यादेर्यावज्जीवं हृष्यतीत्यादिरर्थः । **'न हृष्यति न द्वेष्टि'** इत्यादिरूपेण नञ्सम्बन्धे सति कदाऽपि न हृष्यतीत्यादिरर्थो भवतीति भावः । उदाहृतं च वृत्तौ तार्तीयतृतीयपादे । 'यावज्जीवमन्नमदात्' इत्यादि । 'सर्वारम्भपरित्यागी' इति सामान्यत उक्तम् । विशेपोक्त्या व्यनक्ति- **शुभाशुभेति** । ज्ञानभक्तिवैराग्याद्यन्यशुभत्यागीत्यर्थः । अत एव तदन्यन्न काङ्क्षतीत्यर्थो न काङ्क्षतीत्यस्य ज्ञेयः । एवं 'लोकान्नोद्विजते' इत्यस्यापि 'हर्पामर्षभयैर्मुक्तः' इत्यनेनापौनरुक्त्यं ध्येयम् । उक्तशङ्कानिरासार्थत्वादिति ॥१७॥

**समः शत्रौ च मित्रे च तथा मानापमानयोः ।**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥१८॥**

---

१. अनपः प्राणनाथः श्रीविष्णुः, तद्विषया ईक्षा ईक्षणं दर्शनं यस्य सः तथोक्तः ।
- इति पदरत्नावल्याम् १/२०/१ (श्रीविजयध्वजतीर्थश्रीचरणकृतायां भागवतव्याख्यायाम्)

२. शब्दनिर्णयवचनम् । - गी.ता.

३. पा. सू. ३-३-१३५

**(वि) सुखादिषु साम्यम्, हर्षादिराहित्यं च प्रायिकमेव । उक्तं च -**

**'प्रायः सुखादिषु समः प्रायो हर्षादिवर्जितः ।**
**तथोच्यते यथाऽल्पस्वो निःस्व इत्युच्यते जनैः ।**
**न हि मुख्यतया साम्यं कस्यचित् सुखदुःखयोः ।**
**न च हर्षादिसन्त्यागो यावन्मुक्तिः कुतश्चन ।।'[1] इति ।।१८।।**

**(रा)** किंच 'समः शत्रौ च मित्रे च' इत्यादि । पूर्वं 'समदुःखसुखः' इति सामान्येनोक्तम् । तद्विशिष्योक्त्या व्यनक्ति - **शीतोष्णे**त्यादि । शीतोष्णादिविषयजन्यसुखदुःखेषु । **समः** उत्सेकानुत्सेकहीनः । **सङ्गविवर्जितः** फलस्नेहहीनः ।।१८।।

**तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।**
**अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ।।१९।।**

**(वि) अनिकेतः अनियतवासः, भगवदाश्रयो वा ।।१९।।**

**(रा)** किंच **तुल्यनिन्दास्तुतिः** । हेयत्वेन निन्दायास्तुल्या स्तुतिर्यस्य स तथा । **अनिकेतः** अनियतवासः । अकारवाच्यभगवदाश्रयो वा । **स्थिरमतिः** कुतर्कैरचञ्चलज्ञानः । 'यो मद्भक्तः', '**भक्तिमान्**' इति भक्तेर्बहुवारोक्तिरद्वेष्टेत्यादिनोक्तेषु धर्मेषु भक्तेराधिक्यज्ञापनाय । अत्र सुखादिषु साम्यं हर्षादिराहित्यं च प्रायेणेति ज्ञेयम् । 'प्रायः सुखादिषु समः प्रायो हर्षादिवर्जितः' इत्यादेः । 'सन्तुष्टः सततम्' इत्यस्य 'सन्तुष्टो येन केनचित्' इत्येतद्व्याख्यानरूपमित्यपौनरुक्त्यम् ।।१९।।

**ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।**
**श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ।।२०।।**

**।। इति श्रीमद्भगवद्गीतायां द्वादशोऽध्यायः ।।**

**(वि) भक्तेराधिक्यं ज्ञापयितुं पुनर्भक्ता इत्युक्तम् । पृथग्द्वेषादिसाधनवन्तोऽभक्ताः । प्रियाः समस्तसाधनवन्तो भक्ताः अतीवप्रियाः,**

---

१. गी.ता. उदाहृतप्रमाणवचनम् ।

**इत्याशयेनोपसंहरति - ये त्विति । धर्मो विष्णुः**[1]**, तस्मादनपेतम्, तद्विषयं धर्म्यम् । अमृतमित्यादि संसारनाशकं चेति धर्म्यामृतम् । यथोक्तम्, सर्वम् ॥२०॥**

॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीविद्याधिराजकृतायां द्वादशोऽध्यायः ॥१२॥

**(रा)** 'अद्वेष्टा सर्वभूतानाम्' इत्यादावद्वेषादिकं यत् पृथक् प्रीतिमात्र-साधनमुक्तम् 'स मे प्रियः', 'स च मे प्रियः'[2] इत्यादिना तत् सर्वं मिलितम्, यत्रास्ति **स तु मेऽत्यन्तम्** प्रिय इति प्रागुक्तं पिण्डीकृत्योपसंहरति - येत्विति । धर्म्यामृतं धारकत्वाद्धर्मो विष्णुः । तदुपासनाङ्गत्वादुपचारेण **धर्म्यम्** । अमृतशब्दितमुक्तिसाधनम् **अमृतम्** । धर्म्यं च तदमृतं च **धर्म्या-मृतम्** । यथोक्तमद्वेष्टेत्यादिनोक्तमद्वेषादिकं प्रीतिसाधनं समस्तम् । **श्रद्दधानाः** आस्तिक्यवन्तः । **मत्परमाः** मदुत्तमताज्ञानिनः सन्तः । **ये पर्युपासते** सम्यगनुतिष्ठन्ति । **ते भक्ताः** । **अतीव मे प्रियाः** इत्यर्थः ॥२०॥

॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते द्वादशोऽध्यायः ॥

*****

---

१. गी.भा. उदाहृतप्रमाणवचनम् ।

२. चित्तद्रवस्तथा स्थैर्यं प्रसादो भक्तिलक्षणम् ।
आधिक्येन तु तत्रापि स्थैर्यमेव विशेषतः ।
दम्भस्य चलभक्तेश्च यस्मादश्रादिकं भवेत् ।
दम्भादिपरिहारार्थं निगृह्णीयाच्च धीरधीः ।
अत आध्यात्मिकक्लेशैराधिभूताधिदैविकैः ।
वाक्यैश्च वेदतन्त्राद्यैरुपदेशैश्च तादृशैः ।
बलवच्छासनैर्वाऽपि यस्य भक्तिर्न चाल्यते ।
स एव परमो भक्तो विष्णोर्हृदयवल्लभः ॥ -इति भक्तिविवेके ॥ -भा.ता. (११/२४/२४)

# [1]त्रयोदशोऽध्यायः

## अर्जुन उवाच

**प्रकृतिं[2] पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥१॥**

**(रा)** पूर्वषट्कद्वयोक्तार्थसङ्ग्रहपरोऽयमध्यायः । तथाहि । यत्प्रथमषट्के 'त्रैगुण्यविषया वेदाः'[3] इत्यादिना प्राचुर्येण ज्ञानसाधनमाषष्ठसमाप्तेरुक्तम्, यच्च तत्र द्वितीयेऽध्याये 'न त्वेवाहम्'[4] इत्यादिनाऽनादिनित्यत्वादिना जीवस्वरूपमुक्तम्, यच्च द्वितीयषट्के भगवत्स्वरूपमुक्तम्, यदपि सप्तमे 'भूमिरापः'[5] इत्यादिना क्षेत्रशब्दितं भगवदावासस्थानमुक्तम्, तद्विकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं सङ्क्षिप्यास्मिन्नध्याये प्रश्नपूर्वकं प्रदर्श्यते - **प्रकृतिमित्यादिना । पुरुषं** जीवम् । **ज्ञानं** ज्ञानसाधनम् ॥१॥

## श्रीभगवानुवाच

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ[6] इति तद्विदः ॥२॥**

**(वि) यत्प्रथमषट्के प्राचुर्येण ज्ञानसाधनमुक्तम् । यच्च द्वितीये भगवत्स्वरूपं निरूपितम्, 'न त्वेवाहम्' इत्यादौ यज्जीवस्वरूपं प्रदर्शितम्,**

---

१. पूर्वोक्तज्ञानज्ञेयक्षेत्रपुरुषान् पिण्डीकृत्य विविच्य दर्शयत्यनेनाध्यायेन -गी.भा. सर्वार्थसङ्क्षेपोऽयम्। -गी.ता.

२. अयं श्लोकः क्वचिन्न पठ्यते । परन्तु श्रीमदाचार्यसम्मत इति ज्ञायते ।

३. गी. (२-४६)

४. गी. (२-१२)

५. गी.(७-४)

६. स्वात्माधारः स्वेच्छयैव जीवदृष्टेस्तिरोहितः ।
क्षेत्रज्ञेत्युच्यते विष्णुर्जीवस्य पुरुषोत्तमः ॥ इति च । - भा.ता. (५/११/१४)

**'भूमिरापः' इत्यादौ यत् क्षेत्रस्वरूपमभिहितम्, तद्विप्रकीर्ण-तयोक्तं सर्वम्, बुद्ध्यारोहार्थं सङ्क्षिप्यास्मिन्नध्याये प्रदर्श्यते । तत्र क्षेत्रादिस्वरूपं वक्तुं भगवज्ज्ञानस्यैव मोक्षहेतुत्वात् किं क्षेत्रादिस्वरूपनिरूपणेनेत्याशङ्कां तावत् परिहरति - इदमिति । इदं देहेन्द्रियादिरूपेण परिणतमुपहतं सज्जीवहिंसाव्यवहारहेतुः भगवता प्रेर्यते चेति शरीरम्, अव्यक्तादि, क्षीयते भगवता स्थीयते अस्मिन्निति क्षेत्रम् उच्यते ।**

> **"हिंसाहेतुश्च जीवस्य परेण प्रेर्यते च यत् ।**
> **अव्यक्तादिशरीरं तु तत्क्षेत्रं क्षीयतेऽत्र यत् ॥"[१]**

**इति वचनात् । एतत्क्षेत्रं यो वेत्ति । तम् । तद्विदः क्षेत्रविदः क्षेत्रज्ञ इति प्राहुः ॥२॥**

(रा) ननु भगवत्स्वरूपज्ञानस्यैव पूर्वोक्तदिशा मुक्तिहेतुत्वात् तत्स्वरूपोक्तिर्युक्ता । क्षेत्रस्वरूपं 'महाभूतानि'[२] इत्यादिना किमर्थमत्रोच्यत इति चेन्न । क्षेत्रज्ञत्वविशिष्टभगवज्ज्ञानोपयोगित्वात्, क्षेत्रोक्तिरिति क्षेत्रोद्देशपूर्वं भगवतः क्षेत्रज्ञत्वमाह - **इदमिति** । **कौन्तेय** । **इदं शरीरम्** अव्यक्त-महदहङ्कारादिकम् । भगवदावासस्थानत्वात् क्षीयते स्थीयतेऽत्र भगवतेति व्युत्पत्त्या **क्षेत्रमित्यभिधीयते** । एतत् अव्यक्तादिकं क्षेत्रशब्दितम् । **यो वेत्ति** जानाति । **तम्** । **तद्विदः** क्षेत्रविदः । **क्षेत्रज्ञमिति प्राहुरित्यर्थः** । शरीर-शब्दस्याव्यक्तादिपरत्वं च स्वपरिणामदेहादिवियोगद्वारा जीवस्य हिंसादि-हेतुत्वात् । 'शर् शृ हिंसायाम्' इति धातोः भगवता प्रेर्यत्वादीरं च । 'ईर प्रेरणे' इति धातोः । शर् च तदीरं चेति शरीरमिति व्युत्पत्तेरिति ज्ञेयम् । तेन 'सङ्घातश्चेतना' इति सङ्घातपदेन क्षेत्रविकारेष्वेकदेशत्वेनोक्तशरीरस्य कथं समस्तक्षेत्रत्वमुच्यत इति शङ्का निरस्ता ॥२॥

> **क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
> **क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तज्ज्ञानं मतं मम ॥३॥**

---

१. नारायणश्रुतिवचनम् । - गी.ता.

२. गी. (१३-६)

**(वि) 'एतद्यो वेत्ति' इत्युक्ते जीवस्यापि किञ्चित् ज्ञानात् क्षेत्रज्ञत्व-प्राप्तेस्तन्निराकरणार्थमुक्तम्** - क्षेत्रज्ञं चेति । **क्षेत्रज्ञं मां सर्वक्षेत्रेषु स्थितत्वेन विद्धीत्यर्थः । उक्तं च -**

**'क्षेत्रज्ञो भगवान्[1] विष्णुर्नह्यन्यः क्षेत्रमञ्जसा ।**
**वेत्त्यसौ भगवान् ज्ञेयो व्यक्ताव्यक्तविलक्षणः ॥'[2]**

**इति । अतः क्षेत्रादिज्ञानस्य क्षेत्रज्ञत्वादिविशिष्टभगवज्ज्ञानोपयोगित्वादुभयोः क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तदेव सम्यग्ज्ञानमिति मे मतम् ॥३॥**

**(रा)** जीवस्यापि किञ्चित् क्षेत्रज्ञानात् स किं क्षेत्रज्ञः, इत्यत आह - **क्षेत्रज्ञं चेति । सर्वक्षेत्रेषु** अव्यक्तादिषु । **क्षेत्रज्ञं तु मां विद्धि** । न जीवम् । **क्षेत्र-क्षेत्रज्ञयोर्यज्ज्ञानं तज्ज्ञानम्** । **मम सम्यग्ज्ञानं मतमित्यर्थः** । अत्र 'सर्वक्षेत्रेषु' इत्युक्तिरिदं शरीरमित्यत्र शरीरपदोक्ताव्यक्तादेः क्षीयतेऽत्रश्वरेणेति व्युत्पत्त्या क्षेत्रपदवाच्यत्वमिति सूचनाय ॥३॥

**तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत्प्रभावश्च तत्समासेन मे श्रुणु ॥४॥**

**(वि) क्षेत्रादिस्वरूपं वक्तुं प्रतिजानीते** - तत्क्षेत्रमिति । **यद्यत्स्वरूपं यादृक् यत्प्रकारम्, यद्विकारि येन विकारेण युक्तम्, यतो यादृशप्रवृत्य-नुकूलधर्मवतः पुरुषात्, यत् गच्छत् प्रवर्तत इत्यर्थः । स च प्रवर्तको यः यत्स्वरूपः, यत्प्रभावः यादृशप्रवृत्त्यनुकूलेतरसामर्थ्यवान् । तत् सर्वम् । समासेन सङ्क्षेपतः । मे सकाशाच्छृणु ॥४॥**

**(रा)** क्षेत्रादिस्वरूपं वक्तुं प्रतिजानीते - **तत्क्षेत्रमिति । तत्क्षेत्रं** यद्भगवन्निवासस्थानतया क्षेत्रपदोक्तम् । देहद्वारा जीवहिंसाहेतुतया ईश्वरप्रेर्यत्वहेतुना च शरीरपदेन प्रकृतम् अव्यक्तादि **यच्च** यत्स्वरूपं **यादृक्** यत्प्रकारं **यद्विकारि** । कर्मधारयात् मतुप् । येन विकारेण युक्तम् । **यतः** यादृशप्रवृत्त्य-

---

१. क्षेत्रज्ञोऽक्षर एव च - इति विष्णुसहस्रनामसु ।;
२. गी.ता. उदाहृतप्रमाणवचनम् ।

नुकूलधर्मयुक्तात् पुरुषात् । यत् इणः शत्रन्तं रूपम् । गतिमत् । प्रवर्तत इति यावत् । **स च प्रवर्तकः** । **यः** यत्स्वरूपः । **यत्प्रभावः** यादृशप्रवृत्त्यनुकूलधर्मेतरसामर्थ्यवान् । **तत्** सर्वम् । **समासेन** सङ्क्षेपेण । **मे** सकाशात् । **शृणु** श्रुत्वा निष्ठां कुरु ॥४॥

**ऋषिभिर्बहुधा गीतं [1]छन्दोभिर्विविधैः पृथक् ।**
**[2]ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम् ॥५॥**

**(वि) तव विश्वासोत्पादनार्थं प्रामाणिकमेवाहं वद इत्याह - ऋषिभि-रिति । गीतमिति सर्वत्र सम्बन्धः । ऋषिसम्प्रदायप्राप्तम् । नाना-वेदैर्विविच्योक्तम् । ज्ञानानुकूलन्यायवद्भिः 'अथातो ब्रह्मजिज्ञासा'[3] इत्यादिभिर्ब्रह्मसूत्रपदैश्च । निर्णीतम् ॥५॥**

**(रा)** श्रोतृविश्वासजननायोच्यमानं प्रामाणिकमित्याह - **ऋषिभिरिति** । तदित्यनुषज्यते । यत् 'शृणु' इत्युक्तं क्षेत्रादिस्वरूपं तत् । **ऋषिभिर्बहुधा गीतम्**। गै शब्दे । उक्तमित्यर्थः । **विविधैः छन्दोभिर्वेदैः** । प्रत्येकं **गीतमिति** सर्वत्रानुषज्यते । **हेतुमद्भिः** न्यायोपेतैः । **ब्रह्मसूत्रपदैश्च** । **विनिश्चितमेव शृणु** इत्यन्वयः ॥५॥

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥६॥**

---

१. 'छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयोः' इति मेदिनी ।

२. ब्रह्मसूत्राणि शारीरकसूत्राणि - गी.भा.
ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि (प्रमेयदीपिका)
ब्रह्म - वेदः तदर्थः परब्रह्म वा, तस्य सूत्राणि ब्रह्मसूत्राणि । सकलवेदार्थभूतस्य परब्रह्मणो विष्णोः स्वरूपनिर्णयार्थानि सूत्राणि इति यावत् ॥ - न्यायसुधायाम्
अतः शारीरः परमात्मैव । शारीरौ तावुभौ ज्ञेयौ जीवश्चेश्वरसञ्ज्ञितः ।
तस्य सकलगुणपूर्णत्वादिविषयत्वेन शारीरकमीमांसा ॥ - न्यायसुधायाम्

३. ब्र.सू. १-१-१

**(वि) प्रतिज्ञातमाह** - **महाभूतानीत्यादिना** । **पञ्चमहाभूतानि** । **महत्तत्त्वमप्यहङ्कारशब्देन गृह्यते** । **बुद्धिः अन्तःकरणवृत्तिविशेषः** । **अव्यक्तम् त्रिगुणात्मकं प्रधानम्** । **श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि ज्ञानेन्द्रियाणि पञ्च** । **वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि पञ्च** । **मनश्चैकम् इत्येकादशेन्द्रियाणि** । **इन्द्रियगोचराः विषयाः शब्दस्पर्शरूपरसगन्धाः पञ्च** ॥६॥

**(रा)** क्षेत्रं यच्च यादृक् च तच्छृण्विति प्रतिज्ञातमाह - **महाभूतानीति** । **पञ्चमहाभूतानि** । महत्तत्त्वमप्यहङ्कारशब्देन गृह्यते । **बुद्धिरन्तःकरणविशेषः** । **अव्यक्तं** त्रिगुणात्मकं प्रधानम् । **'इन्द्रियाणि दशैकं च'** इति ज्ञानेन्द्रियमनोभेदेनैकादशेन्द्रियाणि । **इन्द्रियगोचराः** श्रोत्रादिविषयाः शब्दाद्याः **पञ्च च** । **एतत्क्षेत्रम्** । **समासेन** सङ्क्षेपेण । महाभूतत्वादिप्रकारोपेतमुदाहृतमित्यन्वयः ॥६॥

**[१]इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥७॥**

---

१. आनन्दानुभवस्तूम उत्कृष्टानुभवात्स्मृतः ।
तद्युक्तत्वं यथा सौम्यं गुणानामधिकं हि तत् ।
भक्तयादिगुणपूगोऽपि दुःखहेतुत्वभावनात् ।
निष्फलो भवति ह्यद्धा प्रीतस्य सफलो भवेत् ।
तस्मादानन्दमानं तु गुणेषूत्कृष्टमुच्यते ।
तस्याभिमानी ब्रह्मैको भक्तिज्ञानादिकस्य च ।
श्रद्धाभिमानिनी देवी तथैव तु सरस्वती ।
तदन्येषां गुणानां तु तदनु ये विबुधाः स्मृताः ।
गुणानां तु प्रभुर्ब्रह्मा तस्मादेकश्चतुर्मुखः ।
औत्पत्तिकगुणो नाम शुभप्राप्त्यैकयोग्यता ।
तस्याभिमानी प्राणस्तु स हि सर्वगुणाधिक इति च ।
गुणिनां मध्ये गुणिनि स्थितमौत्पत्तिकगुणरूपं सूत्रमित्यर्थः ।
गुणिनां गुणयोग्यत्वं यत्सर्वगुणिषु स्थितम् ।
वायुस्तदभिमान्येकः सर्वगुण्यधिकस्ततः ॥ इति प्रभञ्जने ।

**(वि) इच्छादयः प्रसिद्धाः, सङ्घातो देहः, चेतना चित्तव्याप्तिः, धृतिः धैर्यम्, इच्छादयो विकाराः -**

> **"इच्छा द्वेषः सुखं दुःखं देहो व्याप्तिश्च चेतसः ।**
> **तद्विकारा इति ज्ञेयाश्चिद्रूपेच्छादिमिश्रिता ॥"[1]**

**इति वचनात् । अव्यक्तादीनामभिमानिन्यो देवतास्तात्पर्यनिर्णयादावुक्ताः । तत्रैव द्रष्टव्याः । उक्तमुपसंहरति** - एतदिति ॥७ ॥

**(रा)** 'क्षेत्रं यद्विकारि' इति प्रतिज्ञातक्षेत्रविकारमाह - **इच्छेति । सङ्घातो** देहः। **चेतना** चेतसो व्याप्तिः । **धृति**र्धैर्यम् । **एतत्** प्रागुक्तम् । **क्षेत्रम्** इच्छादिविकारोपेतं सङ्क्षेपेणोक्तमित्यर्थः । महाभूतादिक्षेत्राभिमानिनः । तद्विकारेच्छाद्यभिमानिनश्चावश्यं ज्ञेयत्वादुच्यन्ते ।

आकाशाभिमानी **विघ्नेशः** । वायुमानी मुख्यवायुजो **मरीचिनामा** । अग्निमानी **वह्निः** । अबभिमानी **वरुणः**। भूमिमानिनी **धरादेवी** । अहङ्कारः **शिवः** । महान् **ब्रह्मा** । बुद्धिः **उमा** । अव्यक्तम् **श्रीदेवी** । इन्द्रियेषु मनोऽभिमानिनः **स्कन्देन्द्रानिरुद्धाः** । श्रोत्रं **चन्द्रः**। त्वक् वायुसुतो **मरुत्**। चक्षुः **सूर्यः**। जिह्वा **वरुणस्य रूपान्तरम्** । घ्राणम् **अश्विनौ** । वाक् **अग्निः**। हस्तौ वायुसुतौ **मरुतौ** । पादौ तु विष्णुनाऽऽविष्टौ शचीसुतौ **यज्ञशम्भुनामकौ** । पायुर्**यमः** । उपस्थः **शिवः, मनुश्च** । इन्द्रियगोचरेषु शब्दस्पर्शरूपरसगन्धाभिमानिनः **शिवपुत्राः पञ्च** ज्ञेयाः । विकारेषु इच्छा **श्रीर्भारती** च । द्वेषदुःखाभिमानिनौ **कलिद्वापरौ** । सुखं **मुख्यवायुः** । धृतिः **सरस्वती भारती** च । चेतना **श्रीः** । सङ्घातमानिनोऽन्ये चेतनाः ज्ञेयाः । अभिमानिनां प्रागुक्तव्युत्पत्त्या भगवन्निवासत्वादेव क्षेत्रनामत्वम् । क्षेत्रविकारित्वमपि महदादिभ्योऽतिशयेन विकारितया स्थितत्वादिति ज्ञेयम् ॥७॥

> **अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।**
> **[2]आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥८॥**

---

१. नारायणश्रुतिवचनम् - गी.ता.(१३/३)

२. 'आचिनोति य आचारान् आचारान् ग्राहयत्यपि ।
स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते ॥' इति भारते ।

**(वि)** **ज्ञेयं वक्तुं ज्ञानसाधनानि ज्ञानं च विकारान्तर्भावेनादावाह -** अमानित्वम् इत्यादिना । **अमानित्वम्** आत्मश्लाघाराहित्यम् । आत्माल्पत्वं ज्ञात्वाऽपि महत्वप्रदर्शनं **दम्भः** । 'ज्ञात्वाऽपि स्वात्मनोऽल्पत्वं दम्भो माहात्म्यभावनम्'[1] इत्यभिधानात्, तद्राहित्यम**दम्भित्वम्** । **क्षान्तिः** सहिष्णुत्वम् । **आर्जवं** मनोवाक्कायकर्मणामवैपरीत्यम् । **आचार्योपासनम्** ज्ञानिसेवा । **शौचं** बाह्यान्तरशुद्धिः -

'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम् ।।'[2]

इति स्मरणात् । **स्थैर्यं** भयादिना स्वधर्मादचलनम् । **आत्मविनिग्रहो** विशेषेण मनोनियमनम् ।।८।।

**(रा)** एवं प्रतिज्ञातार्थषट्कमध्ये यच्च यादृक् च यद्विकारीति त्रयमुक्त्वा स च यो यत्प्रभावश्चेति प्रतिज्ञातार्थद्वयं 'ज्ञेयं यत्तत्' इत्यादिना वक्तुम्, न यादृश-तादृशेन श्रवणेन तदनुभवारूढं भवतीति भावेन वक्ष्यमाणज्ञेयद्वयभूत-भगवज्ज्ञानस्य साधनान्याह - **अमानित्वमित्यादि** पञ्चकेन । **अमानित्वम्** आत्मनः श्लाघनराहित्यम् । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं **दम्भः** । तद्राहित्य**मदम्भित्वम्** । **क्षान्तिः** सहिष्णुत्वम् । **आर्जवं** सन्मार्गे मनोवाक्काय-कर्मणामवैपरीत्यम् । **आचार्योपासनं** ज्ञानिनां सेवा । **शौचं** बाह्यान्तरशुद्धिः ।

'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम् ।।'

इति स्मृतेः । **स्थैर्यं** भयादिना स्वधर्मादचलनम् । **आत्मविनिग्रहः** विशेषेण मनसो नियमनम् ।।८।।

**इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।।९।।**

---

मुख्यतः आचार्यो हि श्रीमन्मध्वाचार्य एव - 'आचार्याः श्रीमदाचार्याः' इत्युक्तेः ।

१. अभिधानवचनम् । - गी.भा.; २. दक्षस्मृति ५/३

**(रा) इन्द्रियार्थेषु वैराग्यं शब्दादिषु रागाभावः । अनहङ्कारः अविद्यमानात्मगुणाभिमानमोहाभावः । जन्मादिषु दुःखदोषयोरनुदर्शनमिति वा, दुःखरूपस्य दोषस्यानुदर्शनमिति वा । अनुक्षणमनुसन्धानमित्यर्थः ॥९॥**

**असक्तिरनभिष्वङ्गः [1]पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥१०॥**

**(वि) असक्तिः स्नेहाभावः । अनभिष्वङ्गोऽतिपक्वस्नेहाभावः - 'स्नेहः सक्तिः स एवातिपक्वोऽभिष्वङ्ग उच्यते'[2] इत्यभिधानात् । दाराः स्त्रियः । इष्टानिष्टप्राप्तिषु समचित्तत्वं हर्षविषादाभावः ॥१०॥**

---

१. सत्पुंसु च तथा स्त्रीषु न सङ्गो दोषमावहेत् ।
यथायोग्यं गुणायैव दोषकृद्दुष्टजन्तुषु ॥ इति वाराहे । -भा.ता.(३/३२/४१)
अनित्यसम्बन्धयुताः पित्राद्या नित्ययुग्घरिः -इति च ॥ -भा.ता. (६/१६/९)
नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।
कुर्वन् विन्देत सन्तापं कपोत इव दीनधीः ॥ -भागवते (११/७/५२)
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ।
तस्मात्पुत्रेषु दारेषु मित्रेषु च धनेषु च ।
नातिप्रसङ्गः कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ -वाल्मीकिरामायणे उ.६९४
सम्यक्स्वरूपाभिव्यक्तिरभावो जननस्य च ।
अप्रयत्नात्ततो वृद्धिहेतोः सत्सङ्गतिर्वरा -इति वायुप्रोक्ते ॥ भा.ता.(१/१८/१३)
वह्वपेक्षो हि जिज्ञासुरतो देहादिवृत्तये ।
किञ्चित्सत्स्वपि सङ्गी स्यादशक्ये सति वर्तने ।
कृतकृत्यस्त्यजेत्सङ्गं सदा गुरुसुरादिषु ।
सङ्गी स्यान्न हि तत्सङ्गं विना तु सुखभाग्भवेत् ।
तस्मादनाद्यनन्तैव सक्तिर्गुरुसुरादिषु ।
अन्यत्र कृत्यापेक्षा स्यादिति सङ्गविनिर्णयः ।-इति भविष्यत्पर्वणि ॥ -भा.ता.(११/३/२४)
असज्जनैस्तु संवासो न कर्तव्यः कथञ्चन ।
यावद्यावच्च बहुभिः सज्जनैः स तु मुक्तिदः -इति षाड्गुण्ये ॥ -भा.ता. (११/९/१०)
२. अभिधानवचनम् । - गी.भा.

(रा) पुत्रदारगृहादिषु **असक्तिः** स्नेहाभावः । **अनभिष्वङ्गः** अतिपक्वस्नेहाभावः । **इष्टानिष्टोपपत्तिषु** । उपपत्तिः प्राप्तिः, तत्र **नित्यं समचित्तत्वं** हर्षविषादयोरभावः ॥१०॥

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥११॥**

(रा) **अनन्ययोगेन** रमाब्रह्मादिस्वातन्त्र्यासम्बन्धेन तदविषयिणीति यावत् । अत एवा**व्यभिचारिणी** । **मयि भक्तिः** । **विविक्तदेशसेवित्वम्**, जनसम्मर्दहीनशुद्धस्थानस्थितिः ॥११॥

**अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥१२॥**

**(वि) अध्यात्मज्ञाने नित्यत्वं नियतत्वम् । तत्त्वज्ञानार्थे अपरोक्षज्ञानार्थे दर्शनं शास्त्रदर्शनम् । अथवा - तत्त्वज्ञानविषयस्य विष्णोरपरोक्षदर्शनम् । एतज्ज्ञानमिति निगमनम् । ज्ञायतेऽनेनेति ज्ञानम् । ज्ञानं ज्ञप्तिरिति च व्युत्पत्त्या ज्ञानशब्देन ज्ञानसाधनं ज्ञानं चोच्यते । अतोऽन्यथा, तद्विपरीतम् । यत् तदज्ञानम् । ज्ञानम् तत्साधनं च न भवतीत्यर्थः ॥१२॥**

(रा) **अध्यात्मज्ञाननित्यत्वम्** परमात्मानमधिकृत्य स्थिते ज्ञाने नियतत्वम् । **तत्त्वज्ञानार्थदर्शनम्** । अपरोक्षज्ञानार्थं शास्त्रपर्यालोचनम् । **एतत्** 'अमानित्वम्' इत्यादिनोक्तं विंशतिधर्मजातम् । **ज्ञानमिति** ज्ञायतेऽनेनेति करणव्युत्पत्त्या ज्ञानसाधनं प्रोक्तम् । **अतोऽन्यथा** यत् अस्ति **तदज्ञानं** ज्ञानसाधनं नेत्यर्थः ।

यद्वा - ज्ञानशब्दः भावव्युत्पत्त्या संवित्परश्च । तत्त्वज्ञानार्थस्य तत्त्वज्ञानविषयस्य विष्णोर्दर्शनम्, अपरोक्षज्ञानमित्यर्थः । एतद्भगवद्विषयापरोक्षज्ञानं ज्ञानमिति प्रोक्तम् । **अतोऽन्यथा यत् तज्ज्ञानं न** भवतीति । इह ज्ञानशब्दो

ज्ञानतत्साधनोभयपरः । तत्त्वज्ञानार्थदर्शनमित्ययमप्युक्तदिशा शास्त्रपर्यालोचन-रूपज्ञानसाधनपरः, अपरोक्षज्ञानपरश्च । ततश्चैतच्छब्देनोभयं परामृश्य ज्ञानशब्देन भावकरणोभयव्युत्पत्त्या ज्ञानसाधनत्वज्ञानत्वयोर्विधानं युक्तमिति ज्ञेयम् ॥१२॥

**[१]ज्ञेयं यत् तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।**
**अनादिमत् परं ब्रह्म न सत् तन्नासदुच्यते[२] ॥१३॥**

**(वि) बहुत्वात् साधनात्युपयोगाच्च पूर्वप्रतिज्ञातं 'यतश्च यत्' इत्यर्थं पश्चाद्वक्तुं 'स च यो यत्प्रभावश्च' इति प्रतिज्ञातार्थं प्रतिपादयन्नेवाह - ज्ञेयमित्यादिना । 'यत्प्रभावः' इत्येतदुपपाद्यते । आदिरस्यास्तीत्यादिमत् न आदिमदनादिमत् अनादीत्येवोक्ते छान्दसं लिङ्गव्यत्ययं विभक्तिलोपं वा मन्यमानस्य बहुव्रीहितत्पुरुषसन्देहः । स्वयं कारणं न भवतीत्याशङ्का स्यात् तन्निवृत्त्यर्थे अनादिमदित्युक्तम् । यद्वा - आदिरेषामस्तीत्यादिमन्ति देहेन्द्रियादीनि तद्वर्जितमनादिमत् । मुख्यतो गुणपूर्णत्वात् परं ब्रह्म मूर्तातीतत्वात् न सत्, अमूर्तातीतत्वात् न असत् । उक्तं च -**

**"मुख्यतो गुणपूर्णत्वात् परंब्रह्म जनार्दनः ।**
**मूर्तामूर्तव्यतीतत्वान्न सन्नैवासदुच्यते ॥"**

**इति वचनात् ।**

---

१. 'विज्ञेयं परमंब्रह्म ज्ञापिका परमाश्रुतिः ।' इति कात्यायनश्रुतिः (विष्णुतत्त्वनिर्णये)।

२. पैङ्गिश्रुतिः - तत्वोद्योते

असमर्थमसत्प्रोक्तं सत्समर्थं प्रकीर्तितम् ॥ -भा.ता. (११/२८/१०)
अविद्यमानता नाम जगतः परतन्त्रता ।
यथाऽशक्तस्तु पुत्रादिरसन्नित्युच्यते जनैः(विवेके) ॥ -भा.ता. (११/२८/२३)
सदिति व्यक्तमुद्दिष्टमसदव्यक्तमुच्यते । -भा.ता. (२/६/३२)
असदव्यक्तनाम स्याद् व्यक्तं सदिति चोच्यते । ब्राह्मे ॥ -भा.ता. (३/२७/४८)
स्वाधीनं सदिति प्रोक्तं पराधीनमसत्स्मृतम् ।
अविद्यमानमेतस्माज्जगदाहुर्विपश्चितः ॥
अनाद्यनन्तकालेषु विद्यमानमपि स्फुटम् ।
अस्वातन्त्र्यात् तु नास्त्येवेत्येवं वाच्यं जगत्सदा । -इत्यादि ॥ -भा.ता.(११/८/७)

**"मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते ।**
**मूर्तामूर्तेतरद्ब्रह्म न सत् तन्नासदुच्यते ।"**

**'यदन्यद्वायोश्चान्तरिक्षाच्चैतत् सत्' । वायुरन्तरिक्षं च असत् ॥१२॥**

**(रा)** एवं ज्ञानं ज्ञानसाधनं चोक्त्वाऽधुना 'स च यो यत्प्रभावश्च' इति प्रतिज्ञातज्ञेयस्वरूपम्, तत्प्रभावं च, प्रतिज्ञापूर्वकमाह - **ज्ञेयमित्यादिना** । आदर-जननाय तज्ज्ञानस्य फलमाह - **यज्ज्ञात्वेति** । 'स च यः' इति प्रतिज्ञातज्ञेयस्व-रूपोक्तिः **परंब्रह्मेति** । नामोक्त्या तत्स्वरूपस्यावगतेः अहमेवेति वक्तव्ये 'अक्षरं ब्रह्म परमम्'[1] इति अष्टमोक्तदिशा ब्रह्म स्वयमेवेति सिद्धमिति भावः । 'स च यत्प्रभावः' इत्युक्तमाह - **अनादिमदित्यादिना** । आदिरेपामस्तीत्यादिमन्ति देहेन्द्रियगुणक र्मादिहीनमित्यर्थः । भगवान् क्षेत्रान्तर्गतो भूत्वा क्षेत्रज्ञ इत्युच्यते किमित्यतो नेत्याह - **नेति** । **तद्ब्रह्म सत्** व्यक्तशब्दितकार्यजातान्तर्गतं नेत्युच्यते । **असद्-**व्यक्तशब्दितकारणान्तर्गतं नेत्युच्यते ।'व्यक्ताव्यक्तविलक्षणः'[2] इति स्मृतेः ।

यद्वा - 'मूर्तामूर्तव्यतीतत्वान्न सत् तन्नासदुच्यते'[3] इति स्मृत्युक्तदिशा 'मूर्तं न, अमूर्तं च न' इत्युच्यत इति, 'नेति नेति' इत्यादिश्रुतावित्यर्थः ॥१३॥

**सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥१४॥**

**(वि)** **केशादिष्वपि सर्वत्र पाणिपादादिशक्तिमत्त्वस्य कृष्णकेशे कृष्णे दृष्टत्वात्** [4]**सर्वतःपाण्यादीत्युच्यते । अथवा - पाण्यादियुक्तैरणुतरै रूपैः सर्वत्रस्थितत्वात् सर्वतः पाणिपादादिमत् । उक्तं च -**

**"सर्वतः पाणिपादादिर्यतः पाण्यादिशक्तिमान् ।**
**केशादिष्वपि सर्वत्र कृष्णकेशो हि यादवः ॥**

---

१. गी. (८-३)
२. गी.ता. (१३-२)
३. गी.ता. उदाहृतप्रमाणवचनम्
४. आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा । म.भा.ता.नि.(१/११)

**अणोरणुतरै रूपैर्पाणिपाददिसंयुतैः ।**
**सर्वत्र संस्थितत्वाद्वा सर्वतः पाणिपादवान् ॥"[1] इति ॥ १४ ॥**

**(रा)** पुनस्तत्प्रभावमाह - **सर्वत इति** । कथं जगद्वैलक्षण्यं हरेरित्यतो वाऽऽह - **सर्वत इति** । **तत्** प्रागुक्तं परंब्रह्म । **सर्वतः** सर्वावयवेषु । **पाणि-पादम्** - द्वन्द्वैकवद्भावः प्राण्यङ्गत्वात् । तेन तच्छक्तिर्लक्ष्यते । पाणिपादादि-शक्तिमत्सर्वेऽप्यवयवाः स्वस्वेतरावयवशक्तिमन्तः इत्यर्थः । शुक्लकृष्णकेशा-वतारयोर्बलरामकृष्णयोः पाणिपादादिशक्तेर्दर्शनात् । एवं सर्वतः सर्वावयवेषु चक्षुरादिशक्तिमदित्यर्थः । **सर्वतः** सर्वावयवेषु श्रुतिमच्छ्रोत्रेन्द्रियशक्तिमत् । सर्वेन्द्रियाणां विषयान् कर्माणि च सर्वेन्द्रियैः वेत्ति करोति चेति यावत् । **लोके** जगति **सर्वं** वस्तु **आवृत्य तिष्ठति** व्याप्य वर्तते । यद्वा - **सर्वतः** सर्वत्र देशे स्थितं **तत्** ब्रह्म पाणिपादाक्षिशिरःप्रभृत्यवयवोपेतं सत् **लोके सर्वं वस्तु व्याप्य तिष्ठति** इति । अणोरणुतरैः पाणिपादाद्यवयवोपेतैः अनन्तरूपैः सर्वत्र स्थितं सत् व्याप्तरूपेण च सर्वमपि व्याप्य वर्तते ब्रह्मेति भावः ॥१४॥

**सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।**
**असक्तं सर्वभुक् चैव[2] निर्गुणं[3] गुणभोक्तृ च ॥१५॥**

**(वि) सर्वाणीन्द्रियाणि सर्वे गुणाः विषयाश्च भास्यन्ते ज्ञायन्ते ज्ञाप्यन्ते चानेनेति सर्वेन्द्रियगुणाभासम् । प्राकृतानां भिन्नानां चेन्द्रियाणामभावात् सर्वेन्द्रियविवर्जितम् । न तु सर्वथाऽभावात् । 'सर्वतः पाणिपादं तत्' इत्यादेः । उक्तं च -**

---

१. गी.ता. (१३-१)

२. 'सर्वभृच्चैव' पाठान्तरम् इति रा ।

३. नैर्गुण्यसाधनं यत्तन्निर्गुणं परिकीर्तितम् - इति च ।
यथा शास्त्रोक्तविज्ञानं केवलं ज्ञानमुच्यते । - भा.ता. (११/२५/२४)
त्रैगुण्यवर्जितम् इति भारते. (१/१/१)
'योऽसौ निर्गुण इत्युक्तो वेदादिषु महेश्वरः ।
प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते ॥' इति पद्मपुराणवचनम् ।

**मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।**
**सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥२५॥**

**(वि)** सर्वारम्भपरित्यागी इति विशेषप्रयोजनापेक्षयाऽप्यवैष्णवारम्भाः निषिद्ध्यन्ते इति भेदः । यद्वा - 'नेङ्गते' इति कादाचित्कवैष्णवप्रवृत्त्यभाव उक्तः । सर्वारम्भपरित्यागीति दीर्घोऽवैष्णवप्रवृत्त्यभाव उच्यते । 'इङ्गनं क्षणिकं कर्म दीर्घमारम्भ उच्यते[1]' इत्यभिधानात् ॥२५॥

**(रा)** तथा **मानापमानयोः** प्राप्तावपि विष्णुभक्त्यादौ **तुल्य** एव । न त्याज्यं तदित्यर्थः । कृतावकृतौ चारिपक्षमित्रपक्षयोः सत्वेऽपि विष्णुभक्त्यादि कार्यमेवेत्यर्थः । पूर्वं 'नेङ्गते' इति सामान्यतोऽवैष्णवकर्मारम्भत्यागोक्तावपि प्रयोजनविशेषापेक्षयाऽपि नावैष्णवकर्मारम्भवानित्याह **सर्वारम्भपरित्यागीति**। केनचित् प्रयोजनेनाप्यवैष्णवसर्वकर्मारम्भमकुर्वन्नित्यर्थः ।

यद्वानिङ्गते' इत्यल्पावैष्णवकर्मत्यागः, अत्र तु अतिदीर्घवैष्णवकर्मत्याग इति न पुनरुक्तिः ॥२५॥

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।**
**स गुणान् समतीत्यैतान् [2]ब्रह्मभूयाय कल्पते ॥२६॥**

**(वि)** अव्यभिचारेण भक्तियोगेन सेवत इति **गुणात्ययोपायकथनम्** । **गुणान् समतीत्य लक्ष्म्यादीनामनुग्रहात् तत्कृतं बन्धमतीत्य, ब्रह्मभूयाय 'मम योनिर्महद्ब्रह्म' इति प्रकृतं ब्रह्म लक्ष्मीस्तद्भूयाय, लक्ष्मीवत् स्वयोग्यभगवत्प्रियत्वाय । यद्वा - ब्रह्मणि भूयाय लक्ष्मीप्राप्तये कल्पते ॥२६॥**

**(रा)** एवं गुणातीतलक्षणम् आचारं चोक्त्वा कथं 'गुणानतिवर्तते' इति प्रश्नस्योत्तरमाह - **मां चेति** । **अव्यभिचारेण भक्तियोगेन** नित्यभक्त्याख्यो-

---

१. शब्दनिर्णयवचनम् - गी.ता.

२. बद्धो वाऽपि तु मुक्तो वा न रमावत्प्रिया हरेः ॥ इति पाद्मे । - गी.भा.

पायेन । मां च सेवते । गुणान् सत्त्वादिगुणैः तदभिमानिश्रीदेव्यादिभिः कृतबन्धं समतीत्य । ब्रह्मभूयाय । ब्रह्मशब्दोऽत्र चित्प्रकृतिपरः । चित्प्रकृतिवद्भूयं भवनं ब्रह्मभूयम् । सा यथा विष्णुप्रिया तथा गुणातीतोऽपि विष्णुप्रियो भवतीत्यर्थः । यद्वा - ब्रह्मणि चित्प्रकृतौ भूयाय भावाय चित्प्रकृतिप्राप्तये । कल्पते शक्तो भवति ॥२६॥

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥२७॥**

**॥ इति श्रीमद्भगवद्गीतायां चतुर्दशोऽध्यायः ॥**

**(वि)** नन्नु गुणातीतस्य भगवत्प्राप्तिरेव वक्तव्या । लक्ष्मीप्राप्तिः किमर्थमुच्यत इत्यत आह - ब्रह्मण इति । अहं ब्रह्मणो लक्ष्म्याः, अव्ययस्यामृतस्य च मुक्त-वर्गस्य, शाश्वतस्य अक्षयफलस्य निष्कामस्य धर्मस्य, एकान्तिकस्य दुःखासम्मिश्रस्य, सुष्ठु मोक्षस्य वा । प्रतिष्ठा आधारः । अतो मदवियोगिनीं लक्ष्मीं प्राप्तोऽपि मामेव प्राप्त इत्यर्थः । लक्ष्मीसमीपं प्राप्य तदनुज्ञया भगवत्प्राप्तिरिति दर्शयितुं भगवत्प्राप्तिमनुक्त्वा लक्ष्मीप्राप्त्युक्तिः । अत एव यथा द्वारपालमतीत्य राजानं गच्छति इत्युच्यते एवं गुणानतीत्येति व्यवहारो युज्यत एव । उक्तं चैतत्सर्वम् -

"लोकस्थितान् प्रकाशादीन् प्रायो न द्वेष्टि नेच्छति ।
स्वयं प्रकाशी मोहोज्झस्तथापि पुनरिच्छति ॥
विष्णोः प्रकाशं तं चैव नित्यभक्त्याऽभिसेवते ।
सुखदुःखादिभावेऽपि विष्णुभक्तौ समः सदा ॥
अर्थार्थं वा प्रियार्थं वा निन्दादीनां भयादपि ।
न विष्णुभक्तिह्रासोऽस्य किन्तु साम्यमथोन्नतिः ॥
अवैष्णवारम्भवर्जी विष्णुं याति न संशयः ।"[1]

---

१. गी.ता. (१४/२२,२४)

**"लक्ष्म्यादिभिः कृतो बन्धो योऽनादिः पुरुषस्य तु ॥**
**तमत्येतीह यो विद्वान् स विज्ञेयो गुणात्ययी ।"[1]**

**"अतीत्य त्रीणि रूपाणि महालक्ष्मीं प्रपद्यते ।**
**तया त्वनुगृहीतोऽसौ वैष्णवो विष्णुगो भवेत् ॥"[2] इति ॥२७॥**

॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीविद्याधिराजकृतायां चतुर्दशोऽध्यायः ॥१४॥

**(रा)** ननु गुणातीतस्य भगवत्प्राप्त्यादिकमेव वाच्यम् । लक्ष्मीप्राप्तिः किमर्थमुच्यते इत्यतस्तत्प्राप्तौ मत्प्राप्तिरेव भवति । तस्याः मत्स्थत्वादिति भावेनाह - **ब्रह्मण इति । ब्रह्मणो** महालक्ष्म्याः । **अव्ययस्यामृतस्य च** मुक्तवर्गस्य । **शाश्वतस्याक्षयफलस्य** । निष्कामधर्मस्य **ऐकान्तिकस्य** । अस्मादिदमधिकमिति गणने एवमेवान्ते यस्य तदैकान्तिकम्, तस्य दुःखासम्भिन्नस्य सुखस्य मोक्षस्येत्यर्थः । **प्रतिष्ठा** आधारः । अतो मदवियोगिनीं लक्ष्मीं प्राप्तो मामेव प्राप्तो भवति । गुणातीतो लक्ष्मीसमीपं प्राप्य तदनुगृहीतो हरिं पश्चादाप्नोतीति परम्पराद्योतनायैवमुक्तिरिति ज्ञेयम् ॥२७॥

॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते चतुर्दशोऽध्यायः ॥

******

---

१. प्रवृत्तवचनम् । - गी.ता. (१४/२६)
२. गी.ता. (१४/२६)

# [१]पञ्चदशोऽध्यायः

## श्रीभगवानुवाच

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥१॥

(वि) अस्मिन्नध्याये समग्रसंसारस्वरूपं तदत्ययोपायविज्ञानादि प्रपञ्च्यते । विष्णोः सर्वोत्तमत्वात्, श्रियः परतन्त्रेषूत्तमत्वात्, अचित्प्रकृतेरचेतनेषूत्तमत्वात्, ऊर्ध्वान्युत्तमानि विष्ण्वादीनि मूलानि यस्य स [२]ऊर्ध्वमूलः । त्वं तं तत्र जगद्वृक्षस्य विष्णुः पृथिवीदेवतावत् पृथग्भूतं

---

१. संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति -गी.भा.
त्रयोदशोक्तं विविच्य दर्शयति -गी.ता.

२. ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ॥ -इति कठोपनिषदि (२/३/१)

सर्वोच्चो भगवान् विष्णुर्मूलं भूमिवदस्य तु ।
जगदाख्यस्य वृक्षस्य शाखा देवास्ततोऽवमाः ।
वृक्षमूलं रमादेवी सोऽश्व आशुगतेर्हरिः ।
तद्व्याप्तत्वात्तदन्नत्वादश्वत्थोऽयं प्रकीर्तितः ॥ -इति तद्भाष्ये

जगद्वृक्षस्य बीजे द्वे ब्रह्मा चैव सरस्वती ।
मूलभूतानि कर्माणि मनो बुद्धिरहङ्कृतिः ।
नालत्वेन समुद्दिष्टाः खमाद्याः स्कन्धसंज्ञिताः ।
एकादशेन्द्रियाण्येव शाखास्तु त्रिगुणास्त्वचः ।
प्रवृत्तं च निवृत्तं च फले अस्य प्रकीर्तिते ।
पुष्पमैहिकमुद्दिष्टं रसाः शब्दादयस्तयोः ।
प्रवृत्ताश्च निवृत्ताश्च पक्षिणस्तत्र संस्थिताः ।
वृक्षस्य पृथिवीवच्छ्रीर्विष्णुराकाशवायुवत् ।
तस्या अपि सदाधार एवं ज्ञात्वा विमुच्यते ॥ इति निवृत्ते । -भा.ता.(११/१२/२२)

बीजभूतावपि ह्यस्य ब्रह्मा चैव सरस्वती ।
न रिष्यतो जगत्सृष्टौ वटवृक्षादिबीजवत् ।

**मूलम् । अचित्प्रकृतिर्मृद्वदुपादानतया मूलम् । तदधिष्ठानत्वेन चित्प्रकृतिरपि मूलभाग्भवेत् । अधोभागवदाद्यापेक्षया नीचा महदादयः शाखा यस्यासावधःशाखः, तम् । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । अश्ववच्चञ्चलत्वेन स्थितोऽश्वत्थः इति वा । तम् । चञ्चलत्वेऽपि सर्वात्मनाऽनुच्छिद्यमानः पूर्वब्रह्मकल्पे यथास्थितिस्तथा सर्वत्रापीत्यव्ययं प्राहुः । लोके पर्णोत्पत्तावेव फलदर्शनात् छन्दसां काममोक्षफलहेतुत्वादस्य जगद्वृक्षस्य छन्दांसि श्रुतीः पर्णान्याहुः । यस्तं जगद्वृक्षं वेद स वेदवित् ॥१॥**

**(रा)** त्रयोदशाध्याये संसारहेतुभूतं प्रकृतिमहदहङ्कारादितत्त्वजातरूपं क्षेत्रशब्दितं जगत्स्वरूपम् उक्तम् । 'य एनं वेत्ति पुरुषम्'[१] इत्यादिना भगवदादिज्ञानरूपः तदत्ययोपायश्चोक्तः । तद्द्वयमत्र दर्शयति । ननु पूर्वाध्याय एव तद्द्वयं दर्शितमिति चेन्न । तत्र संसारहेत्वेकदेशगुणानामेव प्रवृत्तिर्दर्शिता । अत्र पुनः समग्रं संसारहेतुप्रकृत्यादिजगत्स्वरूपं प्रदर्श्य, तदत्ययेच्छामुत्पाद्य,

---

स्वकार्यतो महान्तौ च गुणतो रूपतस्तथा ।
पृथिव्युदकवत् तस्माद्बीजत्वं न तु बीजवत् ।
व्यञ्जकत्वान्न चाल्पत्वान्महाक्ष्मावद्रमा स्मृता ।
अण्डो महाक्ष्मा सम्प्रोक्तस्ततः पृथ्व्युदकं तथा ।
जायते नित्यशस्तस्माद्भुक्तं भुक्तं न हीयते ।
तत्राप्युदकवद्ब्रह्मा मृद्वच्चापि सरस्वती ।
जलाधारा यतो मृच्च सर्वत्रापि व्यवस्थिता ।
अन्यथा तु रजोभूता नीयते वायुनाऽखिला ।
अथवा सर्वनाशः स्याज्जलाधारा ततः स्मृता।
वटादिबीजवत् तस्य पुण्यापुण्यमुदीरितम् ।
वाह्योदवच्चाग्निवच्च विष्णुरेव प्रकीर्तितः ॥ इति सत्यसंहितायाम् ।

- भा.ता. (११/१२/२२-२४)

विश्वं सत्यं वशेर्विष्णोर्नित्यमेव प्रवाहतः ।
न क्वाप्यनीदृशं विश्वं तत्तत्कालानुसारतः ॥ व्यासस्मृतिः । - तत्त्वोद्योते

१. गी. (१३-२६)

तत्साधनजिज्ञासुं प्रति प्रागुक्ततदत्ययसाधनं प्रपञ्चयति । अत एव पूर्वानन्तर्यमस्य। तदत्ययसाधनप्रपञ्चनं प्रसङ्गादेव भगवन्महिमानं च दर्शयतीति ज्ञेयम् ।

जगत्स्वरूपं तावदाह - **ऊर्ध्वेत्यादिसार्धश्लोकद्वयेन ।** ऊर्ध्वशब्द उन्नतवाची सन् विष्णुचिदचित्प्रकृतिपरोऽत्र ज्ञेयः । विष्णोः सर्वोत्तमत्वात्, परतन्त्रेषु चित्प्रकृतेः सर्वोत्तमत्वात्, अचित्प्रकृतेरचेतनेषूत्तमत्वात् । ऊर्ध्वाः विष्णुचिदचित्प्रकृतयो वृक्षस्य मूलानीव मूलानि यस्य सविकाराव्यक्तादिप्रागुक्तपञ्चविंशतितत्त्वात्मकस्य जगदाख्यवृक्षस्य तम् **ऊर्ध्वमूलम्** । श्व एकरूपेण न तिष्ठतीति व्युत्पत्त्या, अश्ववच्चञ्चलत्वेन तिष्ठतीति वाऽश्वत्थनामकम् । 'सुपि स्थः'[1] इति कः । 'आतो लोप इटि च'[2] इत्याकारलोपः । सस्य तकारः । जगदाख्यं चिदचिदात्मकं वृक्षम् ।

तत्रायं विवेकः - प्रसिद्धवृक्षस्य धरादेवीवत् विष्णुर्जगद्वृक्षस्य पृथङ्मूलम् । अचित्प्रकृतिः सत्त्वादित्रिगुणात्मिका वृक्षस्य मृद्वत्परिणामितया मूलम् । त्रिमूलो हि जगद्वृक्षः । जडप्रकृतिरपि त्रिगुणात्मकत्वात् मूलत्रयात्मना त्रिभिर्गुणैः परिणमते । चित्प्रकृतिस्तु तदधिष्ठातृत्वात् मूलभागवज्ज्ञातव्येति । अधःशब्दो नीचवाची । विष्ण्वादिप्रागुक्तत्रितयापेक्षयाऽधः नीचाः पञ्चभूतसहिताः महदहङ्कारबुद्धयोऽष्टौ पदार्थाः साभिमानिनः शाखा इव शाखाः यस्य तथा, तम् । **अव्ययं** सर्वथाऽनुच्छिद्यमानम् । पूर्वकल्पे यथा स्थितं तथैव कल्पान्तरेऽपि स्थितम् । प्रवाहतोऽनादिनित्यमिति यावत् । **प्राहुः** प्राज्ञा इत्यर्थः । लोके पर्णोत्पत्तावेव फलोदयदर्शनात्, छन्दसां काममोक्षरूपफलहेतुत्वात्, यस्य जगदाख्यवृक्षस्य छन्दांसि वेदवाक्यजातानि अभिमानिसहितानि पर्णानीव पर्णानि आहुः । एतेन जगद्वृक्षः काममोक्षरूपद्विफल इत्युक्तं भवति । **यस्तं** जगद्वृक्षं **वेद स वेदवित्** वेदार्थज्ञ इत्यर्थः ॥१॥

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥२॥**

---

१. पा.सू. ३/२/४
२. पा.सू. ६/४/२४

**(वि) तस्य शाखाभूतानि अधश्च स्वापेक्षयाऽप्रकृष्टे शरीरादौ, कार्ये चोर्ध्वं चोत्तमे कारणेऽव्यक्ते च प्रसृताः सूक्ष्मरूपेण सन्ति । कीदृश्यः शाखा गुणैः सत्त्वादिभिः प्रवृद्धाः । अर्वाचीनमूलैर्हि शाखाः प्रवृद्धा भवन्ति । सत्त्वादयश्चार्वाचीनमूलानीति । प्रतीतिसमयमात्रे सुखहेतुत्वेन विमर्दनासहत्वसाम्याद्विषया एव प्रवालाः पल्लवा यासां ताः । मूलानि भगवद्रूपादीनि । अधश्च शाखास्वनुसन्ततानि । कर्मापेक्षया फलदातृत्वात् कर्मसम्बन्धीनि कर्मानुबन्धीनि मूलानि ॥२॥**

(रा) **तस्य** जगदाख्यवृक्षस्य । **शाखाः** शाखास्थानीयाः महदाद्याः अष्टौ पदार्थाः चिदचिद्रूपाः । **अधः** स्वापेक्षयाऽप्रकृष्टकार्यभूतशरीरादौ स्वापेक्षयोत्कृष्टोर्ध्वशब्दोक्ते कारणभूताव्यक्ते च सूक्ष्मरूपेण **प्रसृताः** व्याप्ताः । किंरूपाः शाखा इत्यत उक्तम् - **गुणप्रवृद्धा** इत्यादि । गुणैः सत्त्वादिभिः प्रवृद्धाः । गुणानामर्वाचीनमूलत्वात् तादृशमूलैरेव प्रवृद्धे वृक्षे शाखानां प्रवृद्धिर्दृष्टेति भावः । **विषयप्रवालाः** । तात्कालिकसुखहेतुत्वसाम्यात् शब्दाद्याः विषया एव प्रवालाः पल्लवा यासां ताः, विषयप्रवालाः । **मूलानि** ऊर्ध्वपदेन प्रकृतानि विष्णो रूपाणि, जडाजडप्रकृती, सत्त्वरजस्तमांसि च । **अधः** जगदाख्यवृक्षस्य अधोभागेषु च । शाखास्वपीति यावत् । **अनुसन्ततानि** व्याप्तानि । कीदृशानि मूलानीत्यत उक्तम् - **कर्मानुबन्धीनीति** । मनुष्यलोके कर्माणि अपेक्ष्य फलदातृत्वात् कर्मानुबन्धीनि इति[1] ॥२॥

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा[2] ।**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥३॥**

**(वि) अस्य जगद्वृक्षस्य रूपमिह लोके यथास्थितं तथा नोपलभ्यते । अस्य नाशजन्मस्थितिहेतुत्वादन्तादिर्विष्णुः । स केनापि नोपलभ्यते । सु**

---

१. तथा चोक्तम् । 'ब्रह्मास्य पृथङ्मूलं, प्रकृतिः समूलं, सत्त्वादयोऽर्वाचीनमूलं, भूतानि शाखाः, छन्दांसि पत्राणि, देवनृतिर्यञ्चश्च शाखाः, पत्रेभ्यो हि फलं जायते । मात्राः शिफाः । मुक्तिः फलममुक्तिः फलम् । 'मोक्षो रसोऽमोक्षो रसः' इत्यादि श्रुतेः - इत्यधिकं पठ्यते क्वचित् ।

२. 'सम्प्रविष्टा' इति रा.पा.।

**विरूढमूलमतिबद्धमूलमश्वत्थम्** । **दृढेनासङ्गशस्त्रेण** सङ्गराहित्यसहित-ज्ञानासिना । **छित्त्वा** विमर्शलक्षणं छेदं कृत्वा ।

**'ज्ञानासिनोपासनया सितेन छिन्देत संसारतरुं मुमुक्षुः ।"**[1]

**"विमर्शो ह्यस्य छेदस्तं न बध्नाति बध्नाति चान्यान् ॥'**[2]

इत्यादिवचनात् ॥३॥

**(रा)** **अस्य** जगद्वृक्षस्य । **रूपम्** । यथा स्थितं **तथेह** लोके । **नोपलभ्यते** । विकारित्वादिति भावः । जगतो जन्मसंहारकर्तृत्वहेतुनाऽऽद्यन्तपदोक्तो विष्णुः **सम्प्रविष्टश्च** जगद्वृक्षमनुप्रविष्टोऽपि नोपलभ्यते । 'नान्तः', 'न चादिः', 'न च सम्प्रविष्ट उपलभ्यते' इति वाक्यत्रयेणानुपलम्भोक्तिरादरार्था । अस्त्वेवं जगद्वृक्ष-स्वरूपम् । ततः किमित्यत आह - **अश्वत्थमिति** । **सुविरूढमूलं** प्रबल-विष्णवादिबहुमूलकम् । **एनं** प्रागुक्तं अश्वत्थनामकं जगद्वृक्षम् । [3]**असङ्गशस्त्रेण**

---

१. भागवतवचनम् ८-१७-२७ । - गी.भा.; २. गी.भा. उदाहृतप्रमाणवचनम् ।

३. सङ्गस्तु गुणसम्प्रीतिर्गुणवत्त्वेऽतिनिश्चयात् ।
स चेद्धरौ भवेत्तेन मुच्यते नात्र संशयः ।
अपरोक्षदृशेर्हेतुर्भवेत् स स्याद्यदि क्षमः ।
अन्यथा सुखभागेव यद्दृशिर्मोक्षकारणम् ॥ इति दर्शने । -भा.ता. (११/१२/२)
हरिसङ्गविहीनस्तु हरेर्दर्शनवानपि ।
न मुच्यतेऽखिलज्ञोऽपि तमो याति च निश्चयात् ।
गुणैरन्यैर्विहीनोऽपि तद्भक्तेष्वपि च क्रमात् ।
सङ्गवान् सुखभागेव स्याद्गुणैर्मुक्तिमेति वा ।
स्वभक्तसङ्गहीनस्य व्युत्क्रमात् सङ्गिनोऽपि वा ।
स्वसङ्गविघ्नकृद्विष्णुस्तत्सज्जेतैषु तत्र च ॥ इति सत्सङ्गे ।
प्राकृतान्तःकरणजं ज्ञानमस्त्रं सृतिच्छिदम् ।
तदेव तेन संछेद्यं चित्तं प्रकृतिसम्भवम् ।
तेनैव सह संत्याज्यं नैव पूर्वं कथञ्चन ।
ज्ञानं प्रकृतिजं चापि मूलनाशे विनश्यति ।
ततः परं स्वरूपेण ज्ञानेनैव जनार्दनम् ।
वेत्ति मुक्तस्तथाऽऽत्मानं जीवानन्यांश्च सर्वशः । इति माहात्म्ये । -भा.ता. (११/१२/२४)

सङ्गराहित्यसहितेन ज्ञानासिना । [1]छित्त्वा मूलभूतो विष्णुः प्रकृत्यादिजगतो विलक्षणः, जगच्चावान्तरभेदयुक्तं परतन्त्रं प्रवाहतोऽव्ययमित्यादिरूपेण विविच्य ज्ञात्वेत्यर्थः । उक्तज्ञानरूपछेदनं तस्य कार्यमिति भावः ॥३॥

**ततः परं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ।**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः[2] प्रवृत्तिः प्रसृता पुराणी ॥४॥**

**(वि)** ततः तत्परं ब्रह्म परिमार्गितव्यमन्वेषणीयम् । **यस्मिन् गताः पुनर्नेनिवर्तन्ते विमर्शेनोपाय उच्यते** - तमेवेति । **यतः पुराणी चिरन्तनी संसारप्रवृत्तिः प्रसृता विस्तृता । तमेव चाद्यं पुरुषं प्रपद्ये प्रपद्येत । व्यत्ययः छान्दसः । भगवतोऽन्यस्य शरणस्याभावात् तमेव प्रपद्य इत्येवं परिमार्गितव्यमित्यन्वये तस्य परिमार्गिणत्वाभावादिति । 'तं वै प्रपद्येत यं वै प्रपद्य न शोचति'[3] इत्यादिश्रुतिः ॥४॥**

**(रा) ततः परं** परापरतत्त्वविषयविमर्शादनन्तरम् । **तत्** ऊर्ध्वादिपदेन प्रकृतं ब्रह्म । **परिमार्गितव्यम्** अन्वेषणीयम् । श्रवणादिना विषयीकर्तव्यम् । जगद्वैलक्षण्यज्ञाने सत्येव तत्स्वरूपमन्वेष्टुं शक्यत इति भावः । **यस्मिन् गताः भूयः** पुनः **न निवर्तन्ते** न गर्भयातनां प्राप्नुवन्ति । तदिति पूर्वेणान्वयः । जगद्वृक्षच्छेदनोपायमाह - **तमेव चेति** । येयं **पुराणी** चिरन्तनी संसारप्रवृत्तिः । **यतः प्रसृता** विस्तृता । **तमेव चाद्यं** प्राथमिकं पुरुषं विष्णुम् । **प्रपद्ये** प्रपद्येत । व्यत्ययात् । 'तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययम् । जीवराशिः'[4] इति वचनात् । जगद्वृक्षच्छेदनार्थमिति योज्यम् ॥४॥

---

१. प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत् तन्मयो भवेत् ॥ आथर्वण (२/५) इत्यत्र 'वेद्धव्यं' इतिवत्
अत्र 'छित्वा' इति शब्दः । जिज्ञासा खलु ब्रह्मवेधनम् ।

२. यच्छब्दस्तु परामर्शे प्रश्नार्थे चाभिभण्यते ॥ इत्यभिधाने । - भा.ता. (२/१/२२)

३. गी.भा. उदाहृतप्रमाणवचनम् ।

४. नारायणश्रुतिः

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसञ्ज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥**

(वि) भगवत्प्राप्तौ साधनान्तराण्याह - निर्मानेति । अहङ्कारविपर्ययहीनाः जितविषयसङ्गदोषाः । अध्यात्मज्ञाननिरता विशेषतो निवृत्तकामाः । सुखदुःखहेतुत्वात् सुखदुःखसञ्ज्ञैर्द्वन्द्वैः शीतोष्णादिभिर्मुक्ताः । अमूढाः रजस्तमःस्वभावशून्याः । अव्ययं तत्पदं स्वरूपं गच्छन्ति ॥५॥

(रा) भगवत्प्रतिपत्तौ साधनान्तराण्याह - **निर्मानेति** । मानमोहाभ्याम् अहङ्कारमिथ्याज्ञानाभ्यां निर्गतास्ताभ्यां हीना इति यावत् । जितविषयसङ्ग-दोषाः । अध्यात्मनित्याः अध्यात्मज्ञाने भगवच्छ्रवणादौ निरताः । विशेषतो निवृत्तविषयतृष्णाः । सुखदुःखसञ्ज्ञैः द्वन्द्वैर्लाभालाभजयाजयादिरूपै-र्विमुक्ताः । अमूढा रजस्तमस्स्वभावशून्याः । अव्ययं तत्पदं भगवत्स्वरूपम् । गच्छन्ति ॥५॥

**[१]न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते[२] तद्धाम परमं मम ॥६॥**

(वि) कीदृशं तत्पदमित्यत आह - न तदिति । सूर्याद्यप्रकाश्यं मुक्तप्राप्यं धाम स्वरूपम् ॥६॥

(रा) कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थ इत्यत आह - **न तदिति** । तत्पदं सूर्यादिर्न प्रकाशयति । यद्गत्वा यत्स्वरूपं प्राप्य । न निवर्तन्ते संसारं न यान्ति । परमं तत् मम धामरूपमित्यर्थः ॥६॥

**ममैवांशो जीवलोके जीवभूतः सनातनः ।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥७॥**

१. न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ आथर्वण (२/१३)

२. 'न च पुनरावर्तते, न च पुनरावर्तते' छां. (८/१५/१);
'अनावृत्तिः शब्दात् अनावृत्तिः शब्दात् ।' (ब्र.सू. ४/४/२३)

(वि) यदुक्तं जगद्वृक्षच्छेदनार्थं तमेव प्रपद्येतेति तदयुक्तम् । ब्रह्मादि-प्रतिपत्त्याऽपि तत्सम्भवादित्यत आह - ममैवेति । जीवलोके जीवशरीरे । जीवभूतो जीवाख्यः । ब्रह्मादीनां मदंशाभासत्वेनासमर्थत्वात् । जगद्वृक्षच्छेदाय भगवन्तमेव प्रपद्येतेत्याशयः । अंशशब्दो [1]भिन्नांशा-भिप्रायः, न तु मत्स्यादिवत् स्वरूपांशाभिप्रायः । उक्तं च -

"जीवराशिः समस्तोऽपि ब्रह्मरुद्रेन्द्रपूर्वकः ।
किञ्चित्सादृश्यमात्रेण भिन्नोऽप्यंश इवोच्यते ॥"[2]

इति अंशाभासत्वात् । तर्हि कुत्रापि कार्ये जीवस्य सामर्थ्यं न स्यात् इत्यत आह - मन इति । प्रकृतिस्थानि प्रकृतिकार्ये शरीरे स्थितानि । मनःषष्ठानि श्रोत्रादीनि पञ्चेन्द्रियाणि । गोलकेभ्यो विषयान् प्रति जीवः कर्षति ॥७॥

(रा) जगद्वृक्षच्छेदार्थं ब्रह्मादिप्रतिपत्त्यैवालं किं भगवत्प्रतिपत्त्येत्यत आह - **ममैवेति** । **जीवलोके** ब्रह्मादिजीवशरीरे । **सनातनो**ऽनादिनित्यः । **जीवभूतः** जीवरूपः । **ममैव भिन्नांशः** । न तु मत्स्यादिवत् स्वरूपांशः । भिन्नोऽपि सूर्यस्य खद्योत इव किञ्चित् सादृश्यमात्रेणांश इत्युच्यते । अतो ब्रह्मादीनां मदंशाभासत्वेन तेषां ब्रह्मादीनाम् अशक्तत्वात्, तेषां प्रतिपत्तिं विना भगवत्प्रतिपत्तिरेव कार्येति भावः । जीवानामंशाभासत्वे क्वचिदपि कार्ये शक्तिर्न स्यादित्यतोऽस्तीत्याह - **मन इति** । **प्रकृतिस्थानि** प्रकृतिकार्यशरीरस्थानि । **मनःषष्ठानि** श्रोत्रादिपञ्चेन्द्रियाणि । ममांशो जीवभूतः । विषयान् प्रति **कर्षति** प्रवर्तयति स्थितिदशायाम् । देहावाप्तिवेलायां तु मूलकारणात् । उत्क्रान्तौ तु शरीरात् कर्षति ॥७॥

---

१. स्वरूपांशो विभिन्नांश इति द्वेधांऽश इष्यते ।
अनन्तासनवैकुण्ठपद्मनाभाः स्वयं हरिः ।
जीवा इमे विभिन्नांशा धर्माधर्मादिसंयुताः ॥ इति वामने । -भा.ता. (२/६/१९)
अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥
-इति ब्रह्माण्डे ।- भा.ता. (२/३/४३)

२. नारायणश्रुतिवचनम् - गी.ता.

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥८॥**

**(वि) जीवस्येन्द्रियाकर्षणसामर्थ्यमपि ईश्वराधीनं न स्वत इत्याह शरीरमिति । यत् यदा । जीवः शरीरमवाप्नोति यदाप्युत्क्रामति च तदेश्वर एतानि सूक्ष्माणीन्द्रियाणि वायुराशयात् स्थानात् पुष्पादेः । गन्धान् गन्धवतः पुष्पाद्यवयवानिव गृहीत्वा । शरीरं लोकान्तरं च संयाति ।**

**"यत्र यत्रैव संयुक्तो धाता गर्भं पुनः पुनः ।**
**तत्र तत्रैव वसति न यत्र स्वयमिच्छति ॥"[१] इत्यादिवचनात् ॥८॥**

**(रा)** किं स्वसामर्थ्येन नेत्याह - **शरीरमिति । ईश्वरः शरीरं** जीवशरीरं **यदाऽऽप्नोति** तदैव जीवस्तत्प्रेरितः सन् कर्षतीत्यर्थः । स्वातन्त्र्येण तु ईश्वर एव सर्वाणीन्द्रियाणि विषयान् प्रति प्रयुङ्क्ते । तदाह सूत्रे - 'ॐ ज्योतिराद्यधिष्ठानं तु तदामननात् ॐ'[२]इत्यादि । तथा- यच्च यदाऽप्यु**त्क्रामतीश्वरः** । जीवमादा- येति योज्यम् । तदै**तानि** इन्द्रियाणि । सूक्ष्मेन्द्रियांशान् **आशयात्** पुष्पादिस्थानात् । **गन्धानिव** गन्धवतः पुष्पाद्यवयवानिव । भागशो गृहीत्वा **संयाति** । लोकान्तरमित्यर्थः । न च 'अग्निं वागप्येति'[३] इत्यादिविरोधः । तस्य भाग- विषयत्वात् । 'ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ'[४] इति सूत्रात् । अत एव गन्धानिवेति दृष्टान्तोक्तिः । अन्यथा वायुनाऽनेकेष्वाकृष्यमाणेषु गन्धान् गन्धवतः पुष्पाद्यवयवानित्युक्तिर्न स्यात् । सर्वेन्द्रियप्रेरणस्यापि ईशाधीनत्वान्न तेषां प्रतिपत्तिर्जगद्वृक्षच्छेदनशक्तेति भावः । यद्वा - यत् यदा जीवः **शरीरमाप्नोति** तदेश्वरः **एतानि गृहीत्वा** शरीरं **संयाति** । जीवः **यदोत्क्रामति** च तदेश्वरः एतानि गृहीत्वा लोकान्तरं संयातीति योजना ॥८॥

---

१. मोक्षधर्मवचनम् (भारते शान्ति ३२६-११) - गी.भा.
२. ब्र.सू.(२-४-१५)
३. बृ.उ. ५-२-१३
४. ब्र.सू. ३-१-४

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥९॥**

**(वि) इन्द्रियेषु प्रवर्तकत्वेन स्थितस्य विष्णोरिन्द्रियद्वारा किं विषयभोगोऽस्तीत्यपेक्षायामाह** - श्रोत्रमिति ॥९॥

**(रा)** इन्द्रियेषु प्रवर्तकत्वेन स्थितस्य हरेरिन्द्रियद्वारा विषयभोगमाह - **श्रोत्रमिति** । **अधिष्ठायैवेत्यन्वयः** । प्रवर्तकः सन्नेवेत्यर्थः । **विषयान्** शब्दादीन् ॥९॥

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥१०॥**

**(वि) विषयभोगाङ्गीकारे जीववत् भोगोऽपि स्यादित्याशङ्कां परिहरन्, यदि जीवातिरिक्तो देहनियामकः स्यात् तर्हि किमिति न दृश्यत इत्याशङ्कां च परिहरति** - उत्क्रामन्तमिति । **गुणान्वितं सारम् अदुष्टं वस्तु भुञ्जानमित्यनेनाद्या शङ्का निरस्ता । उक्तं च -**

**"भुङ्क्ते हरिः शुभान् भोगानिन्द्रियेषु व्यवस्थितः ।**
**पूर्णानन्दोऽपि भगवान् क्रीडया भुङ्क्त एव तु ॥"[1]**

**इति । ज्ञानिभिर्दृश्यमानत्वाद्विमूढत्वमदर्शने कारणं न नियमवत् स्वभाव इति द्वितीया शङ्का निरस्ता ॥१०॥**

**(रा)** जीववदशुभभोगोऽप्यस्ति किमित्यतः शुभानेव भुङ्क्त इति वदन् कुतो नोपलभ्यत इति शङ्कां निराह - उत्क्रामन्तमिति । **गुणान्वितं** शुभयुक्तमेवेत्यर्थः । **विमूढा** इत्यनुपलम्भे हेतूक्तिः ॥१०॥

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥११॥**

---

१. गी.ता. उदाहृतप्रमाणवचनम् ।

(वि) ननु यत्ने कृतेऽप्यदर्शनात् कथं ज्ञानचक्षुषः पश्यन्तीति तत्राह - **यतन्त इति । योगिनो वृत्तिनिरोधेन निर्मलचित्ताः । अकृतात्मानः अशुद्धबुद्धयः । अचेतसोऽविवेकिनः ॥११॥**

(रा) यत्ने कृतेऽप्यनुपलम्भः कथमित्यत आह - **यतन्त इति । योगिनो** ज्ञानोपायानुष्ठातारः । **यतन्तो** यतमानाः । ज्ञानं प्राप्य । **एनं पश्यन्ति** । **अशुद्ध-बुद्धयो** यतमाना अपि । **अचेतसो** अविवेकिनः । **नैनं पश्यन्ती**त्यर्थः ॥११॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥१२॥**

(वि) 'अधश्च मूलान्यनुसन्ततानि' इति यत् सर्वान्तर्यामित्वस्वरूप-विज्ञानमुक्तं तत् प्रपञ्चयति - यदादित्यगतमित्यादिना । **जगद्भास-कमादित्यगतं तेजो मामकं मदीयं मदधीनं च विद्धि ॥१२॥**

(रा) 'अधश्च मूलान्यनुसन्ततानि' इति यत् सर्वान्तर्यामित्वरूपं विज्ञान-मुक्तम्, यच्चोर्ध्वशब्देन सर्वोत्तमत्वमुक्तं तद्द्वयमध्यायशेषेण प्रपञ्चयति - **यदादित्येत्यादिना** । **तेजः** जगत्प्रकाशनशक्तिः । **मामकं** मदीयम् । मदधीनमित्यर्थः । 'तमेव भान्तमनुभाति सर्वं'[1] इत्यादेः । 'अनुकृतेस्तस्य च'[2] इति सूत्रात् ॥१२॥

**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥१३॥**

(वि) **गां भूमिमाविश्य स्वशक्त्या भूतान्यहमेव धारयामि । सोमो भूत्वा सोमरूपे स्थित्वाऽमृतरसात्मकोऽहमोषधीः संवर्धयामि ॥१३॥**

(रा) **अहं गां** भूमिम् **आविश्य** । **ओजसा** स्वशक्त्या । **भूतानि धारयामि** । अमृतरसात्मकः । सौम्यत्वात् सोमनामा सोमगः सन् । **सर्वा ओषधीः** सस्यादीनि । **पुष्णामि** वर्धयामि च ॥१३॥

---

१. कठ.२-५-१५
२. ब्र.सू. १-३-२२

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥१४॥**

(वि) जठराग्नौ वैश्वानरमूर्तिः सन् स्थित्वा । अग्न्युद्दीपकप्राणापान-संयुक्तो भक्ष्यं भोज्यं च लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि ॥१४॥

(रा) किंच अहम् । विश्वनरसम्बन्धितया वैश्वानरनामा जाठरवैश्वानराग्निस्थः सन् । प्राणिनां देहमाश्रितः । प्राणापानाभ्यां मुख्यप्राणस्वरूपाभ्यां सम्यग्युक्तः । भक्षभोज्यलेह्यपेयभेदेन चतुर्विधमन्नं पचामि । जीर्णं करोमि ॥१४॥

**सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥१५॥**

(वि) अहं सर्वस्य हृदि नियन्तृत्वेन सन्निविष्टः । मत्त एव संस्कारसह-कृतमनोजन्यं ज्ञानमनुभवरूपं च ज्ञाननिवृत्तिश्च सर्वस्य भवति । वेदैश्च सर्वैः परममुख्यवृत्या अहमेव वेद्यः । वेदान्तकृत् व्यासरूपेण वेदनिर्णयात्मक-ब्रह्ममीमांसाकर्ता । [1]वेदवित् तत्त्वतो वेदार्थज्ञानवान् अहमेव ॥१५॥

(रा) किंच सर्वस्य हृदि सन्निविष्टोऽहम् । मत्त एव च स्मृतिः, अनु-भवरूपं ज्ञानम्, अपोहनं विपर्ययश्च भवति । अहमेव परममुख्यवृत्त्या सर्वैश्च वेदैः वेद्यः । वेदान्तकृत् वेदानामन्तो निर्णयो यस्मात् सः, वेदान्तो ब्रह्मसूत्र-सन्दर्भः । तस्य व्यासरूपेण कर्ता । वेदवित् तत्त्वतो वेदार्थज्ञानवानहमेवे-त्यर्थः । 'मां विधत्तेऽभिधत्ते माम्'[2] इत्यादेः ॥१५॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**[3]क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥**

---

१. वेदो वेदवित् अव्यङ्गो वेदाङ्गो वेदवित् कविः' इति विष्णुसहस्रनामसु ।
२. भाग. (११/२१/४३)
३. ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः ।
श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः ।

**(वि) यदुक्तमूर्ध्वशब्देन विष्णोः सर्वोत्तमत्वं तद्विशदयति - [१]द्वाविमा-वित्यादिना । द्वावेवेति सम्बन्धः । इमौ प्रमितौ चेतनौ लोके पर्यालोचने सति । अथवा - द्वावेवेत्यस्योपपत्तये परमपुरुषं व्यावर्तयितुं लोक इत्युक्तम् । ईशितव्यवर्ग इत्यर्थः। सर्वाणि भूतानि ब्रह्मादयो जीवाः । क्षराः शरीरक्षरणात् । कूटस्थः पुरुषो महालक्ष्मीः । 'पुल्लिङ्गेनोच्यते स्त्रीच पुंवच्छक्तिमती क्वचित्'[२] इति वचनात् पुल्लिङ्गत्वम् । अक्षरः देहनाशाभावात् ।।१६।।**

---

चेतनाचेतनस्यास्य राशेः संस्थापकत्वतः ।
कूटस्थ आत्मा सा ज्ञेया परमात्मा हरिः स्वयम् ।।
क्षराक्षरात्मनो यस्मादुत्तमः स सदाऽनयोः ।
पुरुषोत्तमनाम्नाऽतः प्रसिद्धो लोकवेदयोः ।। इति नारायणस्मृतिः । - गी.ता.

'ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात्क्षराः ।।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ।
स्वातन्त्र्यशक्तिविज्ञानसुखाद्यैरखिलैर्गुणैः ।
निस्सीमत्वेन ते सर्वे तद्वशाः सर्वदैव च ।
सर्गस्थितिक्षययतिप्रकाशावृतिबन्धनम् ।
सर्वक्षराणामेकः स कुर्यात्सात्विकमोक्षणम् ।
सर्गस्थितियतिज्योतिर्नित्यानन्दपदोऽक्षरे ।
चेष्टाप्रदश्च सर्वेषामेक एव परो हरिः ।
तस्य नान्योऽस्ति सर्गादिकर्ता निर्दोषकश्च स' इति परमश्रुतिः ।
'ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः'इति स्कान्दे । -विष्णुतत्त्वविनिर्णये

१. एवं वेदादेर्जीवब्रह्मणोरेकत्वप्रतिपादकत्वे अनारम्भणीयत्वप्रसङ्गान्न तत्प्रतिपादकत्व-मित्युक्तम् । इदानीं परमाप्ततमेन भगवता श्रुत्या च विष्णोः सर्वोत्तमत्वस्यैव सर्वशास्त्र-प्रतिपाद्यतया अभिहितत्वाच्च तदेव वेदादिप्रतिपाद्यं नात्मब्रह्मैक्यमित्याह- (द्वाविमौ इति) इमौ इति प्रमाणसिद्धतां सूचयति । पुरुषौ चेतनौ । एवशब्दस्य द्वावेव इति सम्बन्धः । तद्धटनाय परमपुरुषं व्यावर्तयितुं लोके इत्युक्तम् । तदनेनोत्तमपुरुषनिरूपणस्यापेक्षितं पुरुषनिरूपणं कृतम् । - मायावादखण्डनटीकायाम्

२. छां. भा.

**(रा)** एवं सर्वान्तर्यामित्वं प्रपञ्च्याधुना सर्वोत्तमत्वं प्रपञ्चयति - **द्वाविति ।** **इमौ प्रमाणप्रमितौ । पुरुषौ चेतनौ । लोके ईशितव्यवर्गे ।** द्वावेतौ कावित्यत आह - **क्षरश्चेति । सर्वाणि भूतानि** ब्रह्मादिजीवराशिः । शरीरक्षरणहेतुना **क्षर** उच्यते । **कूटस्थः** कूटमाकाशं तद्वत् स्थितः पुरुषः । अक्षरदेहत्वात् श्रीरक्षर उच्यते । 'पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती क्वचित्' इति छान्दोग्यभाष्योक्तेः ॥१६॥

**[1]उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥१७॥**

**(वि)** यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह उत्तम इति । **अन्यः** क्षराक्षराभ्याम् । न पुनरेतयोर्मध्ये कश्चित् पुरुषोत्तमः कल्प्यः । तत्र श्रुत्यादिसम्मतिमाह - परमात्मेति । आत्मशब्दोऽपि चेतनपर्यायः । उक्तं च -

"ब्रह्मादिजीवाः सर्वेऽपि शरीरक्षरणात् क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परो हरिः ॥"[2]

इत्यादियुक्तिमप्याह । य इति लोकत्रयमिति सर्वोपलक्षणम् । यो हि यस्य धारणपोषणकर्ता स तस्मादुत्तमो युक्तः । तत्प्रविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत उक्तम् - अव्यय इति । तत्कथम् ऐश्वर्यादित्याह - ईश्वर इति ॥१७॥

---

१. ततः किमित्यत आह - (उत्तम इति) अन्यः क्षराक्षराभ्याम् । न त्वनयोरेवैकः पुरुषोत्तमः कल्प्यत इति भावः । अन्यस्योत्तमपुरुषत्वे श्रुत्यादिसम्मतिमाह - (..परमात्मेति) आत्मशब्दोऽत्र चेतनपर्यायः । युक्तिं चाह - (य इति) । यो हि यस्य भर्ता स तस्मादुत्तमो युक्तः । आविष्टस्य तन्नाशे नाशप्रसङ्ग इत्यत आह - (अव्यय इति) । तत्कथम् ? ऐश्वर्यादित्याह - (ईश्वर इति) -इति मायावादखण्डनटीकायाम्

२. गी.ता. - उदाहृतप्रमाणवचनम् ।
'ब्रह्मा शिवः सुराद्याश्च शरीरक्षरणात् क्षराः ।
लक्ष्मीरक्षरदेहत्वादक्षरा तत्परोहरिः ।' इति परमश्रुतिः ।
'ब्रह्मशेषसुपर्णेशशक्रसूर्यगुहादयः ।
सर्वे क्षरा अक्षरा तु श्रीरेका तत्परो हरिः ॥' - इति विष्णुतत्त्वनिर्णयोदाहृत स्कान्दवचनम्

**(रा)** यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह - **उत्तम इति** । क्षराक्षराभ्यामिति विपरिणाम्यानुषज्यते । **उत्तमः पुरुषस्तु ताभ्याम् अन्यः** । न त्वनयोरेकः पुरुषोत्तम इत्यर्थः। उक्तार्थे श्रुत्यादिसम्मतिमाह- **परमेति** । आत्माऽत्र चेतनः। क्षराक्षरौ चेतनमात्रम् । उत्तमपुरुषस्तु परमचेतन इति । 'चेतनश्चेतनानाम्'[1] । 'ब्रह्माणि जीवाः सर्वेऽपि'[2] इत्यादि श्रुतिषूदाहृत इत्यर्थः । अतस्ताभ्यामन्यः पुरुषोत्तम इति भावः । उक्तार्थे युक्तिमप्याह - **य इति** । **यः** भूर्भुवः स्वरिति **लोकत्रयमाविश्य बिभर्ति** धत्ते । यो यस्य धारणपोषणकर्ता स तस्मादुत्तमोऽन्यश्च दृष्ट इति भावः । किं लोकनाशे प्रविष्टस्यापि नाशोऽस्तीत्यत उक्तम्- **अव्यय इति** । तत्कथमित्यतोऽचिन्त्यशक्तित्वादित्याह - **ईश्वर इति** । एतेन क्षराक्षराभ्यामुत्तमोऽन्यः किंनामक इत्यपि शङ्का परास्ता ।।१७।।

**[3]यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।**
**[4]अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः[5] ।।१८।।**

**(वि)** स च क इत्यपेक्षायामहमेवेति सप्रमाणकमाह - यस्मादिति । क्षरं चेत्यन्वयः । लोके पौरुषेयागमे ।।१८।।

**(रा)** स किं त्वत्तोऽन्य इत्यतोऽहमेवेति सप्रमाणकमाह - **यस्मादिति** । **यस्मात् क्षरं चातीतः अक्षरादुत्तमोऽतः** कारणात् । **लोके** पौरुषेयग्रन्थे । **वेदे** अपौरुषेयग्रन्थे च । **प्रथितः** प्रसिद्धः । **पुरुषोत्तमोऽहमेवेत्यर्थः** ।।१८।।

**यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ।।१९।।**

---

१. श्वेताश्वतरोपनिषत् ६/१३
२. विष्णुतत्त्वनिर्णयोदाहृतपरमश्रुतिः ।
३. स च क इत्यतोऽहमेवेति सप्रमाणकमाह - (यस्मादिति) क्षरं चातीत इति चशब्दादन्वयः । लोकशब्देन पौरुषेयागम उच्यते । - इति मायावादखण्डनटीकायाम् ।
४. अतः शब्दस्तु हेत्वर्थे तथेत्यर्थे च वर्तते ।
उभयार्थे च भवति यथा शब्दविदो विदुः ।। इति शब्दनिर्णये । -भा.ता. (१०/१४/१६)
५. 'केशवः पुरुषोत्तमः' (वि.स.)

**(वि) अत्रात्मनस्तात्पर्यद्योतनाय ज्ञातुः फलमाह - [1]यो मामिति । एवं नत्वश्वकर्णादिवत् सञ्ज्ञात्वेन । एतच्च पुरुषोत्तमत्वमपरमार्थकमिति सम्मोहवर्जितः । सर्ववित् अस्यैव सर्वशास्त्रार्थत्वात् । [2]सर्वभावेन सर्वप्रकारेण ॥१९॥**

**(रा)** तात्पर्यद्योतनायोक्तार्थज्ञानिनः फलमाह - **यो मामिति । यो**ऽधिकारी **मामेवम् ।** क्षराक्षरोत्तमत्त्वेन वेदादिषु प्रथितत्वप्रकारेण । **असम्मूढः** सर्वोत्तमत्वं मिथ्याभूतमुच्यत इति मोहरहितः सन् । **पुरुषोत्तमं** क्षराक्षरपुरुषाभ्यामुत्तमम् । **जानाति स सर्ववित्** सर्वशास्त्रार्थज्ञानी । **सर्वभावेन** सर्वप्रकारेण । **मां भजति** ॥१९॥

> **[3]इति [4]गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।**
> **एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥२०॥**

**॥ इति श्रीमद्भगवद्गीतायां पञ्चदशोऽध्यायः ॥**

**(वि) एतच्च न यस्मै कस्मैचिद्वाच्यमित्याशयेनाह - इतीति । इदं 'सर्ववित्' इत्याद्युक्तम् । ततः किमित्यत आह - एतदिति । बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः ॥२०॥**

॥ इति श्रीमद्भगवद्गीताविवृतौ श्रीविद्याधिराजकृतायाम् पञ्चदशोऽध्यायः ॥१५॥

---

१. तात्पर्यद्योतनाय वेत्तुः फलमाह - (य इति) । एवमित्यस्य व्यावृत्तिनिरासः असम्मूढ इति । न पुनरश्वकर्णादिवत् सञ्ज्ञामात्रत्वेनेत्यर्थः । स सर्ववित् अस्यैव सर्वशास्त्रार्थत्वात् । सर्वभावेन सर्वप्रकारेण । - इति मायावादखण्डनटीकायाम् ।

२. भावो भक्तिः प्रणामश्च प्रावण्यमपि चादरः ॥ इत्यभिधानात् । -भा.ता. (२/७/४९)

३. एतच्च न यस्मै कस्मै वाच्यमित्याह - (इतीति) । स सर्वविदित्याद्युक्तम् । ततः किमित्यत आह - (एतदिति) । बुद्धिमान् अपरोक्षज्ञानी । कृतकृत्यो मुक्तः । - इति मायावादखण्डनटीकायाम्

४. 'सर्वो हि गीताशास्त्रार्थोऽस्मिन्नध्याये समासेनोक्तः । न केवलं गीताशास्त्रार्थ एव, किन्तु सर्वश्च वेदार्थ इह परिसमाप्तः ।' इति शाङ्करभाष्यम् ।

(रा) एतच्च न यस्मै कस्मैचिद्वाच्यमिति भावेनाह - **इतीति** । **इति** 'अधश्च मूलान्यनुसन्ततानि' इत्यादिनोक्तप्रकारेण । **इदं** सर्वान्तर्यामित्वादिकम् । यद्वा - 'ऊर्ध्वमूलम्' इत्यादिनोक्तप्रकारेण । **इदं** जगद्वृक्षमूलत्वादिकम् । **शास्त्रं** शिक्षणीयम् । **गुह्यतमम्** अतिगोप्यम् । **मयोक्तम्** । ततः किमित्यत आह - **एतदिति** । **एतत्** प्रागुक्तं सर्वम् । **बुद्ध्वा**द्ध्वा । **बुद्धिमान्** अपरोक्षज्ञानी **स्यात्** । **कृतकृत्यो** मुक्तः च स्यादिति ॥२०॥

॥ इति श्रीमद्गीतार्थसङ्ग्रहे श्रीराघवेन्द्रयतिकृते पञ्चदशोऽध्यायः ॥

*****

# [1]षोडशोऽध्यायः

**श्रीभगवानुवाच**

**[2]अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः[3] ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥१॥**

**(वि) साधनानुष्ठानार्थं 'यतन्तो योगिनः' इत्यादिना, 'यतन्तोऽप्यकृतात्मानः' इत्यादिना तद्विरोधि च परित्यागार्थमुक्तम् । तदुभयात्मकं देवासुरलक्षणं प्रपञ्च्यतेऽस्मिन्नध्याये । तत्र देवलक्षणमाह** - अभयमित्यादिना । **अभयं स्वतोऽन्यस्माद्वा स्वस्य भयाभावः । 'यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः' इत्युक्तेः । सत्वसंशुद्धिः चित्तप्रसादः, ज्ञानयोगव्यवस्थितिः ज्ञानोपायनिष्ठत्वम् । दानं स्वभोज्यान्नादेर्यथोचितसंविभागः, दमः इन्द्रियविनिग्रहः । 'ब्रह्मचर्यादिकं तपः' इत्यभिधा-नात् । स्वाध्यायो वेदाध्ययनम् ॥१**

**(रा)** पूर्वाध्याये 'निर्मानमोहाः'[4] इत्यादिना सङ्क्षेपेणोक्तस्य पुमर्थयोर्ज्ञानमोक्षयोः साधनस्य 'यतन्तोऽप्यकृतात्मानः'[5] इत्यादिना चोक्तस्य पुमर्थविरोधिनश्च देवासुरलक्षणरूपत्वात् तत्प्रपञ्चनमस्मिन्नध्याये क्रियत इति पूर्वसङ्गतिरध्यायभेदश्च ज्ञेयः । विरोध्युक्तिश्च साधनमनुतिष्ठता तत्त्यागोऽवश्यं कार्य इति भावेनेति बोध्यम् । तत्रादावभ्यर्हितत्वाद्देवलक्षणं तावदाह - **अभयमित्यादिश्लोकत्रयेण । अभयं** स्वतोऽन्यस्यान्यस्माच्च स्वस्य भयाभावः । 'यस्मान्नोद्विजते लोको लोकान्नोद्विजतेऽच यः'[6] इत्युक्तेः । **सत्त्वसंशुद्धिः** चित्तप्रसादः ।

१. पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति -गी.भा.
देवासुरलक्षणम्। -गी.ता.
२. आत् भगवतः भयम् इति वा । 'भीपस्मादुदेति सूर्यः' इत्यादेः ।
३. ज्ञाने योगे च विशेषेण अवस्थिति इति वा ।
४. गी (१५-५)
५. गी. (१५-११)
६. गी. (१२-१५)

**ज्ञानयोगव्यवस्थितिः ज्ञानोपायनिष्ठता । दानं पात्रे द्रव्यादित्यागः । दमः इन्द्रियनिग्रहः । यज्ञो ज्योतिष्टोमादिः । देवयज्ञपितृयज्ञादिर्वा । स्वाध्यायो वेदाध्ययनम् । तपो ब्रह्मचर्यादि । आर्जवं मनोवाक्कर्मस्वैकरूप्यम् ॥१॥**

**[1]अहिंसा सत्यमक्रोधस्त्यागः[2] शान्तिरपैशुनम्[3] ।**
**दया[4] [5]भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥२॥**

**(वि) अक्रोधः परपीडाकरचित्तविकाराभावः । त्यागः औदार्यमात्म-हिंसकतदविरोधिवर्जनं वा । शान्तिर्भगवन्निष्ठा । पैशुनं परोपद्रव-निमित्तदोषाणां राजादेः कथनम् ।**

**'परोपद्रवहेतूनां दोषाणां पैशुनं वचः ।**
**राजादेस्तु मदाद्भीतेरदृष्टिर्दर्प उच्यते ॥'[6]**

**इत्यभिधानात् । तदभावोऽपैशुनम् । भूतेषु दया सज्जन-दुःखासहिष्णु-त्वम् । लोलुत्वं रागः । 'रागो लौल्यं तथा रक्तिः'[7] इत्यभिधानात् । तदभावोऽलोलुत्वम् । मार्दवमक्रूरत्वम् । ह्रीरकार्यकरणे व्रीडा । अचापल्यं स्थैर्यम् । 'चपलः चञ्चलोऽस्थिरः'[8] इत्यभिधानात् ॥२॥**

---

१. यज्ञेष्वालम्भनं प्रोक्तं देवतोद्देशतः पशोः ।
हिंसानाम तदन्यत्र तस्मात्तां नाचरेद्बुधः ।
यतो यज्ञे मृता ऊर्ध्वं यान्ति दैवे च पैतृके ।
अतो लाभादालभनं स्वर्गस्य न तु मारणम् ॥ इति च । -भा.ता. (११/५/१३)

२. त्यागो विद्याभिमानवर्जनम् -
'मिथ्याभिमानविरतिस्त्याग इत्यभिधीयते' ॥ इति नारायणाध्यात्मे ।भा.ता.(१/१६/२७)

३. असतां सूचकस्य न दोपस्तथापि सतां न सूचनीयमिति दर्शयितुम् । ज्ञातुं शक्यत्वाच्च राज्ञः ।
यद्यधर्मः कृतः सद्भिः स न वाच्यः कथञ्चन ।
असत्कृतमधर्मं तु वदन्धर्ममवाप्नुयात् ॥ इति व्याससमृतौ । -भा.ता.(१/१७/२१)

४. विष्णोर्गृहत्वाद्भूतेषु दया कार्या विजानता ॥ इति च । -भा.ता. (७/६/३०)

५. 'भूतेष्वलोलुस्त्वम्' इति पा.

६. अभिधानवचनम् । - गी.भा.

७. अभिधानवचनम् । - गी.भा.

८. अभिधानवचनम् । - गी.भा.

(रा) अहिंसा परप्राणावियोजनम् । सत्यं यथार्थवचनम् । अक्रोधः परपीडाकरचित्तविकाराभावः । त्यागः औदार्यम् । शान्तिः भगवन्निष्ठता । अपैशुनं परोपद्रवनिमित्तदोषाणां राजादेरकीर्तनम् । भूतेषु प्राणिषु । दया परहितकरश्चित्तगतो धर्मविशेषः । परदुःखासहिष्णुत्वं वा । अलोलुत्वं विषयेषु रागाभावः । आत्मर्हिंसकेष्वप्यविरोधो मार्दवम् । अक्रौर्यं वा । ह्रीः अकार्यकरणे लज्जा । अचापलं स्थैर्यम् ॥२॥

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।**
**भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥३॥**

(वि) तेजः परानभिभवत्वम् । क्रोधाभावेन सहापकर्तुरनपकृतिः । 'अक्रोधः दोषकृच्छत्रोः क्षमावान् स निगद्यते'[1] इत्यभिधानात् । अद्रोहः परवृत्त्यननुरोधः । नातिमानिता अहङ्काररराहित्यम् । शेषं व्याख्यातम् । एते गुणाः दैवसम्पदमभिजातस्य भवन्ति ॥३॥

(रा) तेजः परैरनभिभवः । क्षमा क्रोधाभावेन सहापकर्तुरनपकृतिः । धृतिरनातङ्कः । शौचं मृत्तिकादिभिर्बाह्यशौचम् । भगवत्स्मृत्यादिनाऽऽन्तरशौचम् । अद्रोहः परवृत्त्यननुरोधः । नातिमानिता अहङ्काररराहित्यम् । एते गुणाः दैवीं देवसम्बन्धिनीम् । सम्पदमभिजातस्य प्राप्तस्य भवन्ति । अभिरयं लक्षणा 'इत्थम्भूताख्याने' इत्युक्तलक्षणार्थकप्रत्यर्थे वर्तते इति, तस्य कर्मप्रवचनीय-सञ्ज्ञायां 'कर्मप्रवचनीययुक्ते द्वितीया'[2] इति द्वितीयोपपत्तिः । तथा चैत एव गुणाः मुमुक्षुणाऽवश्यमुपादेया इति भावः ॥३॥

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥४॥**

(वि) असुरलक्षणमाह - दम्भ इति । दर्पः सत्यपि भयकारणे मदाद्भयादर्शनम् । पारुष्यं निष्ठुरत्वम् । शिष्टं स्पष्टम् । एते दोषा आसुरीं सम्पदमभिमुखीकृत्य जातस्य भवन्ति ॥४॥

---

१. अभिधानवचनम् । - गी.भा.
२. पा.सू. २/३/८

**(रा)** त्यागायासुरलक्षणमाह - **दम्भ इति** । आत्माल्पत्वं ज्ञात्वाऽपि महत्त्वप्रदर्शनं **दम्भः** । **दर्पः** सत्यपि भयकारणे मदात् तदभावदर्शनम् । **अभिमानः** प्रमाणातिक्रमः । **क्रोधः** परपीडाकरचित्तविकारः । **पारुष्यं** निष्ठुरत्वम् । **आसुरीं सम्पदमभिजातस्येत्यस्य** प्रागिवार्थः । 'तेन जातस्य' इत्यकर्मकत्वात् सम्पदमिति न द्वितीयानुपपत्तिदोषः ॥४॥

**दैवीसम्पद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥५॥**

**(वि)** **सम्पद्द्वयस्य फलं दर्शयन् अर्जुनस्यासुरस्वभावशङ्कां निवारयति - दैवीति । देवसम्बन्धिनी । सम्पद्विमोक्षाय मता । 'वि' इत्युपसर्गादेव मोक्ष-नानात्वं ज्ञायते । असुरसम्बन्धिनी सम्पत्, निबन्धनाय नीचस्थानेऽन्धे तमसिबन्धाय मता । तदुक्तम् -**

**"विकारेच्छादिभिर्मुक्तश्चिन्मात्रेच्छादिसंयुतः ।**
**मुक्त इत्युच्यते जीवो मुक्तिश्च द्विविधा मता ॥**
**चिन्मात्रदोषदुःखे च देहो मिथ्यादृगात्मकः ।**
**निषिद्धेच्छा च यत्र स्यान्नित्या सा मुक्तिरासुरी ॥"**

**इति ।**

**"चिन्मात्रा वैष्णवी भक्तिर्देहः सम्यग्दृगात्मकः ।**
**सुखमिच्छानुकूला च धृतिर्दैवीति सा मता ।"**

**(इति च)। त्वं तु दैवी सम्पदमभिजातोऽसि । अतो मा शुचः शोकं मा कार्षीः । देवत्वादीनां स्वाभाविकत्वेन कदाचिदप्यनपायादिति भावः ॥५॥**

**(रा)** दैवसम्पदादेः फलं सन्दर्शयन् अर्जुनस्यासुरस्वभावशङ्कां वारयति - **दैवीति** । **अभिजातोऽसि** प्रागिवार्थः । जातस्य तव **दैवीसम्पत्** । लक्षणमित्यर्थः । "वृक्षं प्रति विद्योतते' इत्यत्र 'वृक्ष इव प्रद्योतस्य' इति । अतो **मा शुचः** । शोकं मा कार्षीः । निबन्धनं नीचस्थाने तमसि निवासः । **विमोक्षाय** विविधमोक्षायेत्युक्त्या मोक्षस्य नानात्वमुच्यते ॥५॥

[1]द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥६॥

(वि) "सर्गाणां सुबहुत्वेऽपि शुभाशुभफलाधिकौ।
देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तरा ॥"[2]

इत्यादिप्रमाणसिद्धं गन्धर्वादिसर्गाणां देवासुरसर्गयोरन्तर्भावं वदन् उक्तवक्ष्यमाणसङ्कीर्तनपूर्वकमासुरस्वभावं प्रपञ्चयति - द्वौ भूतसर्गावित्यादिना। भूतसर्गौ भूतस्वभावौ ॥६॥

(रा) ननु सर्गाणामतिबहुत्वाद्देवासुरयोरेवोक्तिः कथमित्यतः शुभाशुभफलाधिक्यादिभाक्त्वरूपपूर्वश्लोकोक्तोपाधिद्वयविवक्षया द्वयोरेवोक्तिरिति भावेनाह - द्वाविति। दैव आसुरश्चेति द्वावेव। प्राणिनां सर्गौ सृष्टी भूतसर्गौ प्राणिस्वभावाविति वा। तदुभयजिज्ञासायामाह - दैव इति। शृण्विति। विस्तरश इत्यनुषङ्गः ॥६॥

---

१. विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः ॥ - इति सदाचारस्मृतौ।
"द्विविधो भूतसर्गोऽत्र दैव आसुर एव च।
विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः ॥
देवानां परमो धर्मः सदा यज्ञादिकाः क्रियाः।
स्वाध्यायस्तत्त्ववेदित्वं विष्णुपूजारतिः स्मृतिः ॥
दैत्यानां बाहुशालित्वं मात्सर्यं युद्धसत्क्रिया।
नीतिशास्त्रप्रवेदित्वं शिवपूजारतिः स्मृतिः ॥
वर्णाश्रमाचारवत्त्वं स्वाध्यायो भक्तिरच्युते।
शिवे सूर्ये तथा देव्यां स्वभावो मानुषः स्मृतः।
अनादिवैष्णवा एव देवतास्तु स्वभावतः।
विपरीताः स्मृता दैत्याः सदैवानादिकालतः ॥
मानुषा मिश्रमतयो विमिश्रगतयोऽपि च"।
इत्यादिवाक्यसन्दर्भैर्ज्ञायतेऽनादियोग्यता ॥ -इति अनुव्याख्याने १५३८-१५४३

२. गी.ता. उदाहृतप्रमाणवचनम्।

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न [1]सत्यं तेषु विद्यते ॥७॥**

**(वि)** आसुरा विहिते [2]प्रवृत्तिं प्रवृत्तिधर्मं वा, निषिद्धे निवृत्तिं निवृत्तिधर्मं वा न विदुः । तेषु शौचाचारसत्यानि न सन्ति ॥७॥

**(रा)** तदाह - प्रवृत्तिमित्यादिद्वादशश्लोकैः । आसुरा जनाः विहिते प्रवृत्तिम्, निषिद्धे निवृत्तिं च न विदुः । तेषु शौचाचारसत्यानि न विद्यन्ते । तात्पर्यद्योतनाय नञोक्तिः ॥७॥

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥८॥**

**(वि)** किंच जगतः सत्यं विष्णुः 'तस्योपनिषत् सत्यस्य सत्यम्'[3] इति । 'एष ह्येव तत् सादयति यमयति चेति'[4] इति श्रुतिः । प्रतिष्ठापकईश्वरश्च स एव । तद्विवर्जितं च जगत् ते असुरा आहुः । 'अन्नाद्भवन्ति भूतानि' इत्यादिनोक्तः परस्परसम्भवोऽस्य नास्तीत्य-परस्परसम्भूतम् अन्यत् कारणं किमस्ति न किञ्चिदपीत्यर्थः । किं तर्हि कारणमित्यत उक्तम् - कामहैतुकमिति । हेतुतः प्राप्तं हैतुकम् । कामेन हैतुकं कामहैतुकम् । स्त्रीपुंसम्भोगैककारणकं कर्मफलकामनैककारणकं वेत्यर्थः ।

अथवा - असुराः जगदसत्यं मिथ्याभूतमाहुः । अत एव अप्रतिष्ठं ज्ञानबाध्यम् । तत एवानीश्वरम् । न च यतो यतो जातमसावीश्वर इति वाच्यम् । यतोऽपरस्परसम्भूतम् । एकस्मादेकस्य नोत्पत्तिरिति यावत् ।

---

१. सत्यं - मीमांसा विशेपतः ब्रह्ममीमांसा ।
२. 'जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः' इति च दुर्योधनोक्तिः पाण्डवगीतायाम् ।
३. गी.भा. उदाहृतप्रमाणवचनम्
४. प्राचीनशालश्रुतिवचनम् । - गी.भा.

**यद्वा - परमेश्वराधीनायाः प्रकृतेर्महान् महतोऽहङ्कार इत्यादिक्रमेण परस्परसम्भूतं न भवतीत्यपरस्परसम्भूतम् । न चेत् किं तर्हि - कामहैतुकम् । काम इति कार्येण कारणं मिथ्याज्ञानमुपलक्ष्यते ॥८॥**

**(रा)** किंच जगत् **असत्यम्** । अत्र सत्यप्रतिष्ठेश्वरशब्दा विष्णुपराः । नञ् बहुव्रीहिः । जगद्धिशरणकर्तृतया सत्यपदवाच्यविष्णुहीनमाहुः । स्थितिहेतुतया प्रतिष्ठापदोक्तविष्णुहीनमाहुः । **अनीश्वरं** स्वामिहीनमाहुः । जगत्सृष्ट्यादिकर्तारं ये न जानन्ति त इति चाहुरासुरजना इत्यनुषङ्गः । 'अपरस्परसम्भूतम्', 'अन्नाद्भवन्ति भूतानि'[1] इति तृतीयोक्तदिशा परस्परसम्भूतं न भवतीत्यर्थः ।

यद्वा - **जगदसत्यं** सत्यं न मिथ्येत्यर्थः । अत एव, शुक्तिरूप्यवन्न प्रतितिष्ठति । [2]**अप्रतिष्ठं** ज्ञानबाध्यम् । **अनीश्वरं** नियन्तृहीनम् । **अपरस्परसम्भूतं**

---

१. गी (३-१४)

२. ये जगत् प्रवदन्त्यज्ञा जीवादन्येशवर्जितम् ।
तेषामपि तु तां वाचमीश एव ददात्यजः ।
न च तर्कैर्भवेदीशो जीवो वेदविरोधतः ।
व्यभिचारिणो यतस्तर्का इष्टसाधनगा अपि ।
क्वचित् क्वचिन्मृषा तर्काः कणादादिप्रदर्शिताः ।
तत्त्वनिर्णयभीरूणां व्यवधानकरास्ततः ।
नैव तु स्थिरबुद्धीनां कुर्युस्ते बुद्धिचालनम् ।
पारम्पर्येण चाज्ञानामुक्त्या लोकेषु विस्तृतम् ।
पठ्यते चाप्यहरहर्न तु विद्वन्मुखोद्गतम् ।
अनन्तगुणकर्मत्वादीशस्योक्तौ सुवेगिता ।
वक्त्यभेदमिवाज्ञानां नाभेदं कुत्रचिच्छ्रुतिः ।
एक आत्माऽद्वयेत्यादिपदानामर्थनिर्णये ।
न वर्तते श्रुतिर्यस्माद्गुणान्तरकुतूहलात् ।
अथवा मोहनार्थाय सुरारीणामनर्हतः ।
कुत्रचिन्निर्णयवचः सुराणामर्थसिद्धये ।
नहीशितृत्वं गर्भस्थे नाप्यसौ निरयोपगे ।
मृषैव ईश्वराभेदः सर्वोत्कर्षश्च जीवगः ।

परेभ्यः सम्भवहीनम् । एकस्मादेकस्य जनिर्नेति यावत् । किं तर्हीति प्रश्नस्योत्तरम्- **अन्यदिति** । सदसद्भ्यामिति शेषः । सदसद्विलक्षणमित्यर्थः । केन जायत इत्यत उक्तम् - **कामहैतुकम्** । कामहेत्वविद्यापरिणामरूपम् ॥८॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥९॥**

**(वि) एतां दृष्टिमाश्रित्य दुष्टचित्ताः अल्पज्ञानाः । घोरकर्मनिरताः । जगतः शत्रवः । क्षयायानिष्टप्राप्तये । कलियुगादौ प्रभवन्ति ॥९॥**

**(रा) एतां दृष्टिमाश्रित्य** । **नष्टात्मानः** दुष्टचित्ताः । **अल्पज्ञानाः** घोरकर्मनिरताः । **जगतः अहिताः** शत्रवः । **क्षयाय** अनिष्टप्राप्तये । कलियुगादौ **प्रभवन्ति** ॥९॥

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।**
**मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥१०॥**

**(विं) किंच काममाश्रित्य दम्भादियुक्ताः प्रवर्तन्ते । कामस्य प्रवर्तकत्वे हेतुः** - दुष्पूरमिति । **कामस्य पूर्तौ सत्यां तत्र काम्ये प्रवृत्त्यभावः पूरयितुमशक्यत्वादेव । सर्वे प्रवर्तन्ते कथम्, मोहात् । मिथ्याज्ञानस्वाभाव्यात् । कुशास्त्राभ्यासजनिताद्विपर्ययाच्च । असद्ग्राहान् दुराग्रहान् गृहीत्वा । अशुचिव्रताः वेदबाह्याः कश्मलव्रताः क्षुद्रोदरभोगार्थं प्रवर्तन्ते ॥१०॥**

**(रा)** दुष्पूरं दुःखेन पूरणीयम् । **कामम्** इच्छाम् । **आश्रित्य** । **दम्भमानमदैर्युक्ताः सन्तः** । **मोहात्** मिथ्याज्ञानस्वभावात् । कुशास्त्राभ्यासजन्यविपरीतनिश्चयात् । **गृहीत्वा** आदाय । असदर्थान् ज्ञात्वेति वा । **अशुचिव्रताः** क्षुद्रभोगाय **प्रवर्तन्ते** ॥१०॥

---

धनवत्त्वं च कर्तृत्वं बलवत्वं च विष्णवि ।
अतो जीवेश्वराभेदं मिथ्येति कवयो विदुः ॥-इति तन्त्रभागवते । -भा.ता.(१०/९४/३७-३८)

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ॥११॥**

**(वि) अपि च मरणावधिकां परिमातुमशक्यां चिन्तामाश्रिताः केवलकामोपभोगनिरताः । एतावदैहिकमेव केवलं नान्यदामुष्मिकमिति निश्चयवन्तः ॥११॥**

(रा) किंच प्रलयान्तां मरणान्ताम् । अपरिमेयां परिमातुमशक्याम् । चिन्तामुपाश्रिताः कामोपभोगपरमाः काम्यमानवत् स्वानुभव एव परमो येषां ते । विषयभोगैकरताः । एतावत् ऐहिकमेव फलं नान्यदामुष्मिकमस्तीति निश्चयवन्तः ॥११॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥१२॥**

**(वि) आशा एव पाशास्तेषां शतैर्बद्धाः । कामक्रोधावेव परमयनं येषां ते तथोक्ताः । कामभोगार्थं धर्मादिरभावनिश्चयान्मिथ्यात्वनिश्चयाच्च स्तेयदुष्प्रतिग्रह परसेवादिनाऽन्यायेनार्थसञ्चयान् । ईहन्ते वाञ्छन्ति ॥१२॥**

(रा) आशा एव पाशास्तेषां शतैर्बद्धाः । कामक्रोधा एव परम् अयनं येषां ते कामक्रोधपरायणाः । कामभोगार्थं काम्यविषयानुभवार्थम् । अन्यायेन चौर्यादिना । अर्थसञ्चयान् द्रव्यसमूहान् । ईहन्ते वाञ्छन्ति ॥१२॥

**इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥१३॥**

**(वि) चिन्ताप्रकारं दर्शयंस्तेषां फलमाह** - इदमद्येत्यादिना ॥१३॥

(रा) चिन्ताप्रकारं दर्शयति - इदमित्यादि त्रयेण । इदं धनम् । अद्य मया लब्धम् । इमं मनोरथं प्राप्स्ये । प्राप्स्यामि । इदं धनम् अस्ति । इदमपि धनं मे पुनर्भविष्यति ॥१२॥

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।**
**ईश्वरोऽहमहं[१] भोगी सिद्धोऽहं बलवान् सुखी[२] ॥१४॥**

---

१. जीवस्य जगतश्चैव यदीशाभेदतो वचः ।
अतात्विकं जगच्चेति विष्ण्वधीनत्ववाचकम् ।
अभेदस्तु कुतस्तस्य परमस्यावरेण तु ।
मिथ्यात्वं च कुतस्तस्य जगतो नित्यवर्तनात् ॥-इति वाराहे ॥ -भा.ता. (१०/९४/३७-३८)

मदन्यो नास्ति सर्वेश इति विद्ध्यासुरं मतम् ।
अस्तीति दैवमुभयोर्हरिरेव ह्यपेक्षितः ।
निषेधविध्योर्विषयः फलदाता च केशवः ।
तादृग्बुद्धेः कारणं च स्थानयोश्चोच्चनीचयोः ॥ - इति च ॥ -भा.ता. (६/४/३२)

अहं ब्रह्मास्मि देवोऽस्मि नास्मि केवलमानुषः ।
जातोऽस्मि वर्धे धनवान् म्रीय इत्यादिका सदा ।
देहादिषु च देवेषु परे ब्रह्मणि चाभिदा ।
मोहाद्यन्मायया नित्यं दृश्यतेऽधममध्यमे ।
स ईशो न विपर्येति सर्वेशत्वात्कदाचन ।
पुत्रादिकं विपर्येति पित्रादिश्च यतो भवेत् ॥ -इति ब्राह्मे । -भा.ता. (१०/५/२०-२१)

परब्रह्मण एकस्य ब्रह्मास्मीति विचिन्तनम् ।
परब्रह्मेति रामादिलक्षणैरवधारयेत् ।
देवोऽस्मीति च देवानां तच्च ज्ञेयं स्वलक्षणैः।
मर्त्यानां मानुषोऽस्मीति प्रतिपत्तिर्विधीयते ।
अन्यथाप्रतिपत्त्या तु तमो यान्ति विनिश्चयात् ।
अन्यथा प्रतिपद्यन्ते आसुरा नियतं जनाः ।
घोरं तमश्च ते यान्ति तथा ज्ञानात् परं सुराः ॥ इति च । -भा.ता.(१०/५/२०-२१)

तल्लक्षणैर्विहीनः सन् ब्रह्म देवोऽस्मि चेति तु ।
असुराः प्रतिपद्यन्ते जन्मादीन् मानुषा जनाः ॥ इति च । -भा.ता.(१०/५/२०,२१)

ब्रह्माहं निर्गुणोऽहं वितथमिदमिति ह्येष पाषण्डवादः - (वायुस्तुतिः)

'मदन्यो जगदीश्वरः । क्वासौ ...' इति हिरण्यकशिपुवचनं श्रीमद्भागवते ७/८/१३

२. दुःखे च सुखमानिनोऽसुराः ।
सुखे सुखैकभावास्तु देवा नैवं तु दानवाः -इति षाड्गुण्ये ॥ -भा.ता. (३/११/२५)

**(वि) ईश्वरः समर्थः परमेश्वरो वा । भोगी ऐहिकामुष्मिकभोगसम्पन्नः। सिद्धः कृतकृत्यः ॥१४॥**

**(रा)** असौ शत्रुर्मया हतः[1] । अपरान् अन्यानपि । शत्रून् हनिष्ये च । अहमीश्वरः परमेश्वरः । भोगी ऐहिकामुष्मिकभोगसम्पन्नः । सिद्धः कृतकृत्यः । बलवान् समर्थः ॥१४॥

**आढ्योऽभिजनवानस्मि[2] कोऽन्योऽस्ति सदृशो मया ।**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥१५॥**

**(वि) आढ्यो धनादिसम्पन्नः । अभिजनवान् कुलीनः । यागादिधर्माननुष्ठास्यामि । मया सदृशः कोऽन्योऽस्तीत्येवमज्ञानेन विमोहिताः ॥१५॥**

**(रा)** आढ्यः धनादिसम्पन्नः । अभिजनवान् कुलीनोऽस्मि । मया सदृशोऽन्यः कोऽस्ति न कोऽपि । यक्ष्ये यागादिधर्माननुष्ठास्यामि । भूरिदक्षिणान्नादि दास्यामि । मोदिष्ये सन्तोषं प्राप्स्यामि । इति एवं रूपेण । अज्ञानेन विमोहिताः ॥१५॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥१६॥**

**(वि) अनेकविषयचित्तेन विभ्रान्ताः । पुत्रमित्रादिमोहजालेन समावृताः। विषयभोगेष्वतितरां सक्ताः । अशुचौ नरके पतन्ति ॥१६॥**

**(रा)** एवं चिन्ताप्रकारमुक्त्वा तेषां फलमाह - अनेकेति । अनेकचिन्तायुक्तमनसा विशेषभ्रान्तिमन्तः । पुत्रमित्रादिविषयमोहाख्यजालेन

---

१. 'य एनं वेत्तिहन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हान्ति न हन्यते ॥ (गी.२/१९) इति ह्युक्तम् ।

२. गुणा एवाभिजात्याख्यास्तद्वानेवाभिजातिमान् ।
अतोऽभिजात्यवान् विष्णुस्तदन्ये तूपचारतः ॥ इति शब्दनिर्णये । -भा.ता.(१०/९४/३७-३८)

समावृताः । विषयभोगेष्वतितरामासक्ताः सन्तः । अशुचौ नरके । पतन्ति ॥१६॥

**आत्मसम्भाविताः स्तब्धा [१]धनमानमदान्विताः ।**
**यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥१७॥**

**(वि) आत्मनैव सम्भाविताः आराधिताः । वयमाराध्या इति मन्यमानाः । स्वयमेव स्वात्मानमाराधयन्ति । नतु तेषामन्यः कश्चित् विद्वान् पूजकः । अत एव स्तब्धाः अनम्राः । धननिबन्धनगर्वदर्पोपेताः । विधानदक्षिणादिवर्जं दीक्षितशब्दव्यवहार्यत्वराजसन्मानादिसिद्ध्यर्थमेव यज्ञैर्यजन्ते ॥१७॥**

(रा) यागादिकुर्वतां कथं नरके पात इत्यत आह - **आत्मेति** । आत्मनैव स्वेनैव **सम्भाविताः** बहुमताः । वयं पूज्या इति मन्यमाना इति यावत् । अत एव **स्तब्धाः** अनम्राः । धननिमित्तगर्वदर्पाभ्याम् उपेताः । **ते अविधिपूर्वकम्** । **दम्भेन** स्वमहत्त्वप्रदर्शननिमित्तेन । **यज्ञैः** ज्योतिष्टोमादिभिः **यजन्ते नाम** । न कृतार्थबुद्ध्या । अतो नरकप्राप्तिस्तेषाम् इति भावः ॥१७॥

**अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः[२] ॥१८॥**

**(वि) अहङ्कारादिकमाश्रिताः आत्मपरदेहेषु च नियामकत्वेन स्थितं माम्, यदीश्वरः कारयिता इदानीमकुर्वाणं मामपि कारयतु, कुर्वाणं च निवारयतु इति प्रद्विषन्तः । अभ्यसूयकाः निर्दोषगुणपूर्णे मयि दोषानाविष्कुर्वन्तः ॥१८ ॥**

---

१. विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानामत एव सतां दमाः ॥ -भारते (उद्योग. ३४/४४)

२. मामात्मपरदेहेष्विति । न कस्यचिद् विष्णुः कारयिता, यदि स्यान्ममापीदानीं कारयतु' इत्यादि ।
'ईश्वरो यदि सर्वस्य कारकः कारयीत माम्।
अद्येति वादिनं ब्रूयात् सदाऽधो यास्यसीति तु'इति हि सामवेदे यास्कश्रुतिः॥ -गी.भा.

**(रा)** सर्वकर्मकारयितारं सर्वान्तर्यामिणं त्वां कुतो न यजन्त इत्यत आह - **अहङ्कारमिति** । अहङ्कारादिसंश्रिताः सन्तः । आत्मदेहे परदेहेषु च नियामकतया स्थितं **मां प्रद्विषन्तः** । यदि ईश्वरः कारयिताऽस्ति तर्हीदानीमकुर्वाणं मां कारयतु, कुर्वाणं च विघातयतु इत्येवं भगवदपलापरूपप्रद्वेषं कुर्वन्तः । **अभ्यसूयकाः** निर्दोषे दोषान् वदन्तः । गुणपूर्णे गुणहीनतां वदन्तः । यजन्त इत्यनुपज्यते ॥१८॥

**तानहं द्विषतः[१] क्रूरान् संसारेषु नराधमान् ।**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥१९॥**

**(वि) यजन्ते तान् मद्वेषिणः । संसारेषु तत्राप्यासुरीष्वेव योनिषु क्षिपामि ॥१९॥**

**(रा)** नरके पतन्तीत्येतावदेव न तेषां फलम्, किन्तु किञ्चित् कालं संसारमनुभूय पश्चान्नित्यनरकमपि मयैव प्राप्नुवन्तीत्याह - **तानिति** द्वाभ्याम् । **तान्** 'प्रवृत्तिं च' इत्यादिनोक्तान् । **द्विषतः क्रूरान्** । अत एव **अशुभान् नराधमान् संसारेषु** । तत्रापि आसुरयोनिषु । **अजस्रं** पुनः पुनः । **क्षिपामि** स्थापयामि ॥१९॥

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥२०॥**

---

१. मद्भक्तिवर्जितं श्रेयो ये मन्यन्ते दुराशयाः ।
तेषामन्ते तमो घोरमनन्तं प्राप्यते ध्रुवम् ॥ इति मान्यसंहितायाम् ।
-भा.ता. (११/१४/११)

देहमात्रं स्वमात्मानं यः परं चाभिपश्यति ।
अन्धे तमसि मग्नस्य नोत्तारस्तस्य कुत्रचित् ॥ इति च । -भा.ता.(११/२३/५०)

आभूतसम्प्लवाज्जन्म जीवेशत्वं विजानतः ।
ततः पतत्यधो यस्मादुत्थानं नैव तु क्वचित् ॥ इति च । -भा.ता. (११/३/७)

(वि) ततो मूढास्तामसस्वभावाज्जन्मनि जन्मनि आसुरीं योनिमेवापन्नाः मामप्राप्यैव मत्प्राप्तिशङ्काशून्याः । अधमां नित्यनिरयलक्षणां गतिं यान्ति । उक्तं च -

'येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि ।
मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति ॥
मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्यो न च जायते ।
स्वस्मिन्नपि तथाऽन्यस्मिन्नियन्ताऽन्य इतीरिते ।
प्रद्विषन्त्यसुरास्ते तु सर्वे यान्त्यधरं तमः ॥'[१]

इति । प्रवृत्तिं चेत्यादिना योऽयमासुरस्वभाव उक्तः । स तेषु तेषु वादिषु यथास्वभावं योजनीयः । तदनुसारेणाऽनर्थतारतम्यं चावगन्तव्यम् । अत एव मध्येऽपि नरके पतन्तीत्युक्तम् ॥२०॥

(रा) ततो मूढाः तामसस्वभावाः । जन्मनि जन्मनि अनेकजन्मसु । आसुरीं योनिमापन्नाः । मामप्राप्यैव । अधमां नित्यनरकलक्षणाम् । गतिं यान्ति ॥

**त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।**
**कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥**

(वि) उक्तेषु पुमर्थविरोधिषु प्रधानं दोषत्रयमवश्यं त्याज्यमित्याह - त्रिविधमिति । कामक्रोधलोभा इतीदं त्रिविधं नरकद्वारम् । अत एव आत्मनो नाशनमनर्थप्रापकम् । तस्मादेतत् त्रयमवश्यं त्यजेत् । ततश्च कारणाभावान्न नरकप्राप्तिरिति भावः ॥२१॥

(रा) उक्तेपु पुमर्थविरोधिपु प्रधानदोपत्रयमवश्यं त्याज्यमित्याह - त्रिविधमिति । कामः क्रोध लोभ इति इदं त्रिविधं नरकद्वारं नरकसाधनम् । अत एव आत्मनो नाशनम् अनर्थप्रापकम् । तस्मादेतत् त्रयं त्यजेत् । ततश्च कारणाभावान्नरकाणामप्राप्तिरिति भावः ॥२१॥

---

१. ब्रह्मवैवर्तवचनम् । - गी.ता.

